**कल्पलतेवोदारा तारादेवीति नामिका सारा ।**
**तस्य विशुद्धाचारा जायाऽजायत सदाकारा ॥ ५१**

**व्याख्या**—तस्य श्रीतेजपालस्य **तारादेवीति** नामिका जाया कलत्रमजायत जाता । किम्भूता? कल्पलतेव कल्पवल्लीवोदारा उदात्ता मनोभिलषितार्थदात्रीत्यर्थः । तथा सारा श्रेष्ठा, तथा विशुद्धो निर्दोष आचारः क्रियाव्यापारो यस्याः सा विशुद्धाचारा । तथा सन् शोभन आकार आकृतिर्यस्याः सा सदाकारा ॥ ५१

**गौर्जरदेशाधिपतेरुपदां दत्त्वाऽन्यदा स तुरगादिम् ।**
**प्राप्ताधिकप्रसादो देशं जग्राह मूल्येन ॥ ५२**

**व्याख्या**—अन्यदाऽन्यस्मिन् काले **गौर्जरदेशाधिपते**र्गौर्जराधीशस्य, स तुरगादिं तुरङ्गगजस्वर्णादिसहितामुपदामुपायनं दत्त्वा, प्राप्तो लब्धोऽधिकः प्रसादोऽनुग्रहो यस्मात् स प्राप्ताधिकप्रसादः, मूल्येन वेतनेन, लोकरूढ्या 'मुक्तातेन' देशं **गूर्जरदेशं** जग्राह गृहीतवान् ॥ ५२

**अणहिलपत्तनशास्ता समभूच्छ्रीतेजपालसङ्घपतिः ।**
**षट्त्रिंशद्राजकुलीज्ञातीनां न्यायकरणेन ॥ ५३**

**व्याख्या**—श्रीतेजपालसङ्घपतिः षट्त्रिंशद्राजकुलीनां ज्ञातीनां च लोकप्रसिद्धानां न्यायकरणेन सत्यासत्यादिनीतिकरणेन **अणहिलपत्तनस्य** शास्ता पालकः समभूज्जातः । तत्र षट्त्रिंशद्राजकुल्य इमाः—इक्ष्वाकुवंश १ सूर्यवंश २ सोम ३ यादव ४ परमार ५ चाहमान ६ चौलुक्य ७ छिन्दक ८ सिलार ९ सैन्धव १० चापोत्कट ११ प्रतीहार १२ चन्दुक १३ राट १४ कूर्पट १५ शक १६ करक १७ पील १८ करङ्क १९ वाउल २० चन्देल २१ गुहिल्लपुत्र २२ पौलिक २३ मोरिक २४ मङ्कुयाणकर २५ धान्यपालक २६ राजपालक २७ अमङ्ग २८ निकुम्भ २९ दधिलक्ष ३० कुरुदलिक ३१ हूण ३२ हरियड ३३ नट ३४ माष ३५ खोखर ३६ रूपा इति । ज्ञातयः सार्द्धा द्वादश प्रसिद्धा एव ॥ ५३

**तस्याभूत् सुतरत्नं वील्हानाम्ना नरोत्तमं सगुणम् ।**
**तारादेवीसदुदरसरोरुहे राजहंससमम् ॥ ५४**

**व्याख्या**—तस्य श्रीतेजपालस्य वील्हानाम्ना सुतरत्नं पुत्ररत्नमभूत् । उत्कृष्टसूनुर्बभूवेत्यर्थः । किम्भूतं? नरेष्वौदार्यधैर्यादिभिर्गुणैरुत्तमं मुख्यम् । पुनः किम्भूतं? गुणाः सत्त्वादयस्तैः सहितं सगुणम् । पुनः किम्भूतं? **तारादेव्या** यत्सदुदरं शोभनकुक्षिस्तदेव सरोरुहं पद्मं तत्र राजहंससमं सितच्छदोपमम् ॥ ५४

**गुरुवचनादथ शत्रुञ्जय-रैवततीर्थयोर्व्यधाद्यात्राम् ।**
**श्रीसङ्घेन सनाथो मुक्तं कृत्वा स तीर्थेशम् ॥ ५५**

**व्याख्या**—अथानन्तरं गुरुवचनाद्गुरूपदेशतः, स तेजपालः सङ्घपतिः, श्रीसङ्घेन साधु-श्राद्धादिसमुदायेन, सनाथः सहितस्तीर्थेशं मुक्तं कृत्वा । लोकरूढ्या 'मुगतउ' इति विधाय । शत्रुञ्जय-रैवततीर्थयोः **पुण्डरीक-उज्जयन्ताख्यपुण्यक्षेत्रयोः**, यात्रां जिनार्चनोत्सवं व्यधाचकार । 'तीर्थं शास्त्रे गुरौ यज्ञे, पुण्यक्षेत्रावतारयोः ।' इत्यादि ॥ ५५

**प्रतिसाधर्मिकगेहं तद्देशे हेममुद्रया युक्तम् ।**
**सस्थालमदान्मोदकमेकैकं पञ्चसेरमितम् ॥ ५६**

**व्याख्या**—स श्रीतेजपालः सङ्घाधिपतिः, तद्देशे **गूर्जर-सौराष्ट्रदेशे** प्रतिसाधर्मिकगेहं सकलसाधर्मिकगृहेषु, हेममुद्रया सौवर्णनाणकेन युक्तमेकैकं पञ्चसेरमितं पञ्चसेरप्रमाणं, सस्थालं भाजनविशेषसहितं मोदकं लड्डुकम्, अदाद् ददौ । 'समिताखण्डाज्यकृतो, मोदको लड्डुकश्च सः ।' इति शेषः ॥ ५६

**श्रीजिनकुशलगुरूणां सूरिपदस्थापनां व्यधात् समहम् ।**
**राजेन्द्रचन्द्रसूरेः कराम्बुजात् पत्तने नगरे ॥ ५७**

**व्याख्या**—य इति पदमध्याह्रियते । यः श्रीतेजपालः समहं सोद्धर्षं सोत्सवमिति यावत्, श्रीजिनकुशलगुरूणां सूरिपदस्थापनामाचार्यपदवीप्रतिष्ठां, पत्तने नगरे, राजेन्द्रचन्द्रसूरेः कराम्बुजात्पाणिपद्मात्, व्यधादकार्षीत् । श्रीजिनकुशलसूरीणामाचार्यपदं नन्दीमहपूर्वकं दापयति स्मेति भावः ॥ ५७

**श्रीसम्मेतशिलोच्चययात्रां कर्तुं ततः प्रवृत्तेऽस्मिन् ।**
**मार्गं म्लेच्छा रुरुधुर्द्रव्यं गृहयालवो बालाः ॥ ५८**

**व्याख्या**—ततः श्रीशत्रुञ्जयादियात्राकरणादूर्ध्वमस्मिन् श्रीतेजपाले, श्रीसम्मेतशिलोच्चयस्य श्रीसम्मेताद्रेर्यात्रां कर्तुं विधातुं प्रवृत्ते सति, द्रव्यं द्रविणं गृहयाल्वो ग्रहीतारो बाला विवेकविकला म्लेच्छाः शबराः मार्गं पन्थानं रुरुधुः । मार्गं रुद्ध्वा तस्थुरित्यर्थः ॥ ५८

**सङ्घपतिर्निजसुभटान् सज्जीकृत्याभवद् रणे सज्जः ।**
**म्लेच्छानामपि सेना नंष्ट्वाऽगात् कान्दिशीकाऽथ ॥ ५९**

**व्याख्या**—अथ म्लेच्छरोधानन्तरं सङ्घपतिः श्रीतेजपालो, निजसुभटानात्मीययोधान्, सज्जीकृत्य सन्नद्धान् विधाय, रणे तैः सह सङ्ग्रामे सज्जः प्रगुणोऽभवत् । रणे प्रवृत्ते सति म्लेच्छानामपि सेना सैन्यं, कान्दिशीका कां दिशं व्रजामीत्याकुला सती, नंष्ट्वा पलाय्य, अगाज्जगाम । म्लेच्छसैन्यं ननाशेत्यर्थः । 'सज्जौ सन्नद्धसम्भृतौ ।' सम्भृतः परिपूर्णः प्रगुण इति यावदिति तद्वृत्तौ ॥ ५९

**लब्धजयोऽथ दयामयहृदयः श्रीजैनधर्ममाहात्म्यात् ।**
**विंशतिजिनशिवभूमौ कृतयात्रोऽभून्मुदां पात्रम् ॥ ६०**

**व्याख्या**—अथोपस्थितम्लेच्छजयानन्तरं, लब्धजयः प्राप्तविजयो, दयामयहृदयः सदयचित्तः श्रीतेजपालः, श्रीजैनधर्ममाहात्म्याच्छ्रीआर्हतधर्मप्रभावाद्, विंशतिजिनानां श्रीऋषभवासुपूज्यारिष्टनेमिवीरव्यतिरिक्तविंशतितीर्थकृतां, शिवभूमौ मोक्षप्राप्तिस्थाने, कृतयात्रो विहितोत्सवो, मुदां हर्षाणां, पात्रं भाजनम्, अभूद्बभूव ॥ ६०

**एवं विधाय यात्रां दीनारयुताच्छमोदकं विपुलम् ।**
**सस्थालं प्रतिभवनं श्राद्धानां दत्तवान्मार्गे ॥ ६१**

**व्याख्या**—एवं पूर्वोक्तप्रकारेण, यात्रां विधाय कृत्वा, श्रीतेजपालो मार्गे पथि, श्राद्धानां श्रावकाणां, प्रतिभवनं प्रतिगृहं, विपुलं महत्सस्थालं भाजनविशेषयुतं, दीनारेण सौवर्णनाणकेन, युतः सहितः, अच्छोऽमलो यो मोदको लड्डुकस्तं, दत्तवान् ददौ ॥ ६१

**कृतवांश्च सत्रशालां दीनानाथार्थिलोकसन्तुष्ट्यै ।**
**एवं श्रीजिनशासनसमुन्नतिं यो विधत्ते स्म ॥ ६२**

**व्याख्या**—च पुनर्दीना दैन्यभाजः कृपणा इत्यर्थः । अनाथा अस्वामिकाः, अर्थिलोका याचकलोकास्तेषां सन्तुष्ट्यै सन्तोषाय चेतःसमाधानाय, सत्रशालां दानशालां, कृतवांश्चक्रे ।

'सत्रमाच्छादने क्रतौ, सदा दाने वने दम्भे ।' इत्यनेकार्थः ।

एवममुना प्रकारेण यः श्रीतेजपालः श्रीजिनशासनस्य समुन्नतिमुदयं विधत्ते स्म चकार । यतः—

'जिणभवणं जिणबिंबं भत्तो राया सुसावओ मंती । अइसेसा आयरिया पंचुज्जोया जिणमयम्मि ॥' ६२

**कृत्वाऽनशनं विधिना श्रीमज्जिनसङ्घपूजनाभिरतः ।**
**स्वर्गं जगाम सङ्घाधिपतिः श्रीतेजपालाख्यः ॥ ६३**

**व्याख्या**—श्रीतेजपालाख्यः श्रीतेजपालनामा सङ्घाधिपतिः, श्रीमज्जिनसङ्घपूजनाभिरतः श्रीमत्तीर्थकृत्साधुश्राद्धादिसमुदायार्चनासक्तः सन्, विधिनाऽऽगमोक्तानुष्ठानपूर्वकम्, अनशनमाहारसंन्यासं कृत्वा, स्वर्गं सुरालयं जगाम ॥ ६३

**तत्पुत्रः सङ्घपतिर्वील्हाख्योऽभूत् प्रभूतसम्पत्तिः ।**
**वीनादेवी नाम्ना पत्नी तस्याभवद्धन्या ॥ ६४**

**व्याख्या**—तत्पुत्रस्तस्य श्रीतेजपालस्य पुत्रः सूनुः, सङ्घपतिः सङ्घाधीशोऽभूज्जज्ञे । किम्भूतः ? प्रभूता बह्वी सम्पत्तिः सम्पद्यस्य स प्रभूतसम्पत्तिः । तस्य वील्हाख्यस्य सङ्घपतेर्वीनादेवीति नाम्ना, पत्नी जाया, धन्या पुण्ययुताऽभवद् बभूव ॥ ६४

**कडुआ-धरणा-नन्दाभिधानपुत्रत्रयान्वितः प्रयतः ।**
**निजकधनं सत्क्षेत्रे नियोजयन् योऽजयन्मुदिरम् ॥ ६५**

**व्याख्या**—यः प्रयतः प्रयत्नवान् धर्मकर्मणि सोद्योगः सन्, निजकधनमात्मीयद्रविणं, सत्क्षेत्रे जिनभवनादौ, नियोजयन् व्यापारयन् ददान इत्यर्थः । मुदिरं घनाघनम्, अजयज्जिगाय । दानेन मेघमधश्चकार । दानशौण्ड इत्यर्थः । किम्भूतः ? कडुआ-धरणा-नन्दाभिधानं यत्पुत्रत्रयं तेनान्वितो युक्तः ॥ ६५

**शत्रुञ्जयोज्जयन्ताभिधानजैनानवद्यतीर्थेषु ।**
**यः सङ्घयुतो यात्रां चक्रे सङ्घं च सच्चक्रे ॥ ६६**

**व्याख्या**—यो वील्हाख्यः सङ्घाधिपतिः, शत्रुञ्जयोज्जयन्ताभिधानानि यानि जैनानि जिनसत्कानि, अनवद्यतीर्थानि निष्पापपुण्यक्षेत्राणि, तेषु सङ्घयुतः साधुश्राद्धादिपूगसमेतः, यात्रां चक्रे । च पुनः सङ्घं सच्चक्रे । वस्त्रान्नपानादिदानेन सत्कृतवान् । सङ्घपूजां व्यधत्तेत्यर्थः ॥ ६६

**यावज्जीवं प्रददे पारणकं पर्वपौषधस्थानाम् ।**
**श्राद्धानां विविधान्नप्रधानपक्वान्नपानाद्यैः ॥ ६७**

**व्याख्या**—य इति गम्यते । यो वील्हाख्यः सङ्घेशो यावज्जीवं यावदायुः, पर्वपौषधस्थानां पर्वाण्यष्टम्यादितिथयस्तत्र यत्पौषधं त्रिविधचतुर्विधाहारपरित्यागरूपो व्रतविशेषस्तत्र तिष्ठन्तीति पर्वपौषधस्थास्तेषां श्राद्धानां, विविधान्नैर्नानाविधशालिदालिरूपभक्तैः प्रधाना ये पक्वान्नपानाद्याः सिंहकेसर-जयलब्धिका-लपनश्री-घृतपूर-शर्करा-द्राक्षादिपानप्रभृतयः । आद्यग्रहणात्ताम्बूलादयः । तैः कृत्वा पारणकं पारणां प्रददे । उपोषितस्य भोजनं पारणा ॥ ६७

**सुयशोराशिनिदानं दानं दत्त्वाऽर्थिदीनहीनेषु ।**
**सुमनाः सुमनाः समभूद् यः स्वीकृतसुकृतपाथेयः ॥ ६८**

**व्याख्या**—यः श्रीवील्हाख्यः सङ्घेशः सुमनाः प्राज्ञः, अर्थिनो याचकाः, दीनाः कृपणाः, हीनाः विकलाङ्गास्तेषु, सुयशोराशिनिदानं शोभनकीर्तिश्रेणिकारणं, दानं—दीयत इति दानं धनं दत्त्वा, स्वीकृतमङ्गीकृतं सुकृतमेव पुण्यमेव पाथेयं शम्बलं येन स स्वीकृतसुकृतपाथेयः, सुमना देवः समभूत् । 'सुमनाः प्राज्ञदेवयोः, जात्यां पुष्पे ।' इत्यनेकार्थः ॥ ६८

**तदनु कडुआभिधानः सङ्घपतिः सङ्घभारधौरेयः ।**
**स्मृत्वा पूर्वजभूमिं देशेऽगान्मेदपाटाह्वे ॥ ६९**

**व्याख्या**—तदनु वील्हास्वर्गारोहानन्तरं, कडुआभिधानः कडुआनामा । 'ग्रामनाम्नोर्न संस्कारः' इति । सङ्घपतिः, पूर्वजभूमिं पूर्वजानां पूर्ववंश्यानां या भूमिरवस्थानक्षेत्रं तां स्मृत्वा, मेदपाटाह्वे लोकरूढ्या 'मेवाड' इति नाम्नि देशे, अगाज्जगाम । किम्भूतः ? सङ्घभारस्य वहने धौरेय इव धुरन्धर इव सङ्घभारधौरेयः । शाकपार्थिवादित्वान्मध्यपदलोपी समासः ॥ ६९

**वसति स्म चित्रकूटे विचित्रकूटे स राजसम्मान्यः ।**
**समभूत्तस्य विशिष्टा जने प्रतिष्ठाऽतिभूयिष्ठा ॥ ७०**

**व्याख्या**—स कडुआभिधः सङ्घपतिः, विचित्राणि विविधानि कूटानि शिखराणि यस्मिन्नेवंविधे चित्रकूटे, राजसम्मान्यश्चित्रकूटाधीशसत्कारार्हः सन्, वसति स्म अवात्सीत् । तथा तस्य कडुआकस्य, जने लोके, अतिभूयिष्ठा घना विशिष्टा श्रेष्ठा, प्रतिष्ठा गौरवं समभूत् । सकललोकोपादेयवाक्योऽभूदिति भावः ॥ ७०

मालवकपातिसाहेः समागमं समवगम्य योऽन्येद्युः ।
राणाकेन जनानां रक्षायै बद्धकक्षेण ॥ ७१
मुक्तः प्रधानवृत्त्या सन्धिं कर्तुं सुलब्धलक्ष्येण ।
सन्धिं विधाय साहेर्न्यवर्तयत् तत्क्षणात् सैन्यम् ॥ ७२ युग्मम् ॥

**व्याख्या** – यः कडुआकोऽन्येद्युरन्यस्मिन् काले, राणाकेन चित्रकूटप्रभुणा, मालवपातिसाहेः समागममागमनं, समवगम्य ज्ञात्वा, सन्धिं सन्धानमेकत्वं कर्तुं, प्रधानवृत्त्या लोकप्रसिद्धया मुक्तः प्रेषितः । किम्भूतेन राणाकेन ? जनानां स्वनगरनिवासिलोकानां रक्षायै पालनाय, बद्धकक्षेण बद्धा कक्षा येनेति । 'अन्तरीयपश्चिमाञ्चले कक्षा, प्रतिज्ञायामपि' इति **मङ्खः** । पुनः किम्भूतेन ? सुलब्धलक्ष्येण शोभनो लब्ध इव प्राप्त इव लक्ष्यो लक्षणीयो न्यायव्यवहारो येन स सुलब्धलक्ष्यस्तेन, सन्धिं साहिना सह सन्धानं विधाय, तत्क्षणात्तत्समय एव, सद्य इत्यर्थः । साहेः सैन्यं न्यवर्तयन्निवर्तयामास । पश्चाद्वालितवानित्यर्थः ॥ ७२

सर्वोऽपि नगरलोकस्तस्य प्रशशंस बुद्धिमाहात्म्यम् ।
यस्मात्स एव मान्यो, यो लोकं पालयेदशिवात् ॥ ७३

**व्याख्या** – तस्य कडुआकस्य, सर्वोऽपि समस्तोऽपि, नगरलोकः पुरीजनो, बुद्धिमाहात्म्यं धिषणामहिमानं, प्रशशंस स्तौति स्म । यस्माद्धेतोः स एव पुमान् मान्यः पूजनीयो यो लोकमशिवादुपद्रवात् पालयेद्रक्षेत् । 'मानण् पूजायाम् ।' अनेनापि साहिसेनोपद्रववारणेन जनो रक्षित इति ॥ ७३

तदनु भटैरिह निखिलैर्नागरिकैरपि स मन्त्रिराज इति ।
प्रोक्तो मन्त्रविधानाद् यतो जनाः कृत्यवक्तारः ॥ ७४

**व्याख्या** – तदनु एवंविधपराशक्यकृत्यकरणानन्तरं, इह चित्रकूटे, भटैर्योधैर्निखिलैरपि समस्तैरपि नागरिकैः पौरैः, स कडुआको, मन्त्रविधानाद् रहस्यालोचनं मन्त्रस्तस्य विधानात् करणात्, '**मन्त्रिराज**' इति प्रोक्तः कथितः । मन्त्रः कर्तव्यावधारणमस्त्यस्य मन्त्री, तेषां राजाऽधिपतिर्मन्त्रिराज इति । यतो यस्मात् कारणाज्जना लोकाः कृत्यवक्तारो विहितकर्माभिधायकाः, येन यादृक्कर्म विधीयते तस्य वक्तारो लोकाः स्युः । अनेन साहिसेनानिवृत्त्यै मन्त्रो विहित इति मन्त्रिराज उक्त इति ॥ ७४

लोकोक्तं विरुदाख्यानं चिरस्थायि प्रशस्यं च न भवतीति राजप्रतिपादितं तदाह –

राज्ञाऽथ सप्रसादं सर्वाङ्गीणाद्भुताभरणदानात् ।
सम्मानितो ददेऽस्मै सचिवाधीशत्वमपि हर्षात् ॥ ७५

**व्याख्या** – अथ सन्धिकरणानन्तरं, सप्रसादं सानुग्रहं, राज्ञा राणाकेन, सर्वाङ्गानि व्याप्नुवन्ति सर्वाङ्गीणानि यान्यद्भुताभरणान्याश्चर्यकारिभूषणानि, तेषां दानाद्वितरणात्, सम्मानितः सत्कृतः । तथाऽस्मै कडुआख्यसद्माधीशाय, हर्षात् प्रमोदात्, सचिवाधीशत्वं मन्त्रीश्वरत्वमपि ददे प्रदत्तम् । 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोतीति खः ।' पूर्वपदस्थनिमित्तादुत्तरपदतद्धितस्थनकारस्य णत्वमिष्यते सर्वाङ्गीण इति **प्रक्रियाकौमुद्याम्** ॥ ७५

तदनु स्वगोत्रजानां कृतवान् करमोक्षणं प्रयत्नेन ।
प्राप्तोदयोऽत्र रविरिव शूराणां वृत्तिरियमेव ॥ ७६

**व्याख्या** – तदनु मन्त्रिपदसम्पदवाप्त्यनन्तरं, अत्र चित्रकूटे, स इत्याकृष्यते । स कडुआख्यो मन्त्री, प्राप्तोदयो लब्धोन्नतिः, स्वगोत्रजानां स्वान्वयोत्पन्नानां पुंसां, करमोक्षणं करो राजग्राह्यभागस्तस्य मोक्षणं मोचनं, प्रयत्नेन महोद्यमेन कृतवान् । क इव ? रविरिव श्रीसूर्य इव । सोऽप्युदयाद्रौ प्राप्तोदयः, करमोक्षणं करा रश्मयस्तेषां मोक्षणं सर्वासु दिक्षु प्रवर्तनं तत्करोत्येव । यतः शूराणां वीराणामियमेव वृत्तिर्वर्तनं, यच्छूरा लब्धोदयाः करमोक्षणं विदधतीति । शूरः सूर्योऽप्युच्यते । 'शूरः सूरश्च तरणौ' इति **शब्दप्रभेदे** । 'करः प्रत्यायशुण्डयोः, रश्मौ वर्षोपले पाणौ' इत्य**नेकार्थः** । प्रत्यायो राजग्राह्य इति तद्वृत्तौ ॥ ७६

**पत्तननगरं प्राप्तः पुनरपि मन्त्री गुणाधिकत्वेन ।**
**दुग्धे लब्धास्वादः करोति कः काञ्जिके प्रीतिम् ॥ ७७**

**व्याख्या**—मन्त्री कडुआख्यः, पुनरपि **चित्रकूटाद्**, गुणाधिकत्वेनानायासं सकलवस्तुप्राप्तेरधिकगुणत्वेन, **पत्तननगरं** प्राप्तः । 'पत्तनं रत्नयोनिः' इत्युक्तेः पत्तनस्य गुणाधिकत्वम् । चित्रकूटं परित्यज्य गुणाधिकत्वं पात्तनीयमधिगम्य पत्तनं प्राप्तः । यतो दुग्धे गोपयसि, लब्ध आस्वादो रसो येन स लब्धास्वादः, कः पुमान्, काञ्जिके आरनाले, प्रीतिमानन्दं करोति । अयमर्थः—येन गोपयः पीतं भवति तस्य किल काञ्जिकं न स्वदते, तथा येन पत्तननिवासः कृतो भवति स किलान्यत्र वसन्न प्रीतिमादधातीति पुनरपि पत्तनमाययाविति ॥ ७७

**राज्ञाऽपि ससम्मानं दत्ता तस्यैव पत्तनाधिपता ।**
**गुणवति पात्रे लब्धे कः सुविवेकी न रज्येत ॥ ७८**

**व्याख्या**—राज्ञाऽपि पत्तनाधीश्वरेणापि, तस्यैव कडुआख्यमन्त्रिण एव, ससम्मानं सत्कारपूर्वकं, पत्तनाधिपता **अणहिलपत्तनै**श्वर्यं दत्ता । यतो गुणवति सगुणे, पात्रे योग्ये नृपतिमन्त्रिणि वा, कः सुविवेकी सुष्ठु विवेकवान् सदसद्विवेचको, न रज्येन्न रागं विदधीत ? । 'पात्रं तु कूलयोर्मध्ये, पर्णे नृपतिमन्त्रिणि । योग्यभाजनयोः' इत्यादि । 'रञ्ज्य रञ्ज मौञ्ज रागे' इति **कविकल्पद्रुमे** । अत एव गुणवत्तां तस्य ज्ञात्वा पत्तनाधिपत्यं प्रादायीत्यर्थः ॥ ७८

**श्रीजिनबिम्बं विधिना विधाप्य वित्तव्ययेन किल बहुना ।**
**नरकरनिषेधपूर्वं सर्वे सन्तोषिताः स्वजनाः ॥ ७९**

**व्याख्या**—किलेति वार्तायाम् । आप्ता एवं वार्तयन्ति । येनेति गम्यते । येन कडुआख्येन मन्त्रिणा, बहुना भूयसा वित्तव्ययेन द्रविणसमुत्सर्गेण, श्रीजिनबिम्बम्, जात्येकवचनं—जिनबिम्बानि, विधाप्य कारयित्वा, नराणां नृणां, यः करो राजग्राह्यो भागस्तन्निषेधपूर्वं, स्वजना बान्धवाः, सन्तोषिताः सन्तोषं प्रापिताः । 'व्ययण् वित्तसमुत्सर्गे त्यागे' । किलेति 'वार्तारुचिन्यक्करणसम्भाव्यहेत्वलीकेषु' इति ॥ ७९

**श्रीजिनराजगुरूणां लोकहिताचार्यवर्यकरमूले ।**
**सूरिपदं कृतनन्दीमहोत्सवो दापयामास ॥ ८०**

**व्याख्या**—य इत्यध्याह्रियते । यः कडुआख्यो मन्त्री, कृतो विहितो नन्दीमहोत्सवो जिनागमप्रसिद्ध उत्सवविशेषो येन स कृतनन्दीमहोत्सवः, श्री**जिनराजगुरूणां लोकहिता**चार्याणां, यद्वर्यं मुख्यं, करमूलं पाणिपार्श्वं तस्मिन्, सूरिपदमाचार्यपदवीं, दापयामास अदीदपत् । 'मूलं पार्श्वाद्ययोरुडौ निकुञ्जशिफयोः' इत्य**नेकार्थः** । श्रीजिनराजसूरिणामाचार्यपदं येन दापितमित्यर्थः ॥ ८०

**सूरिपदोत्सवदर्शनसमुत्सुकायातजानपदलोकान् ।**
**वस्त्रादिदानपूर्वं तुतोष यो दोषकृतमोषः ॥ ८१**

**व्याख्या**—यः कडुआभिधो मन्त्री, सूरिपदे श्री**जिनराज**सूरीणामाचार्यपददाने य उत्सवो महस्तस्य दर्शनायाऽवलोकनाय समुत्सुका उत्कण्ठिता आयाताः प्राप्ता ये जानपदलोका देशीयजनास्तान्, वस्त्रादिदानपूर्वम्, आदिग्रहणात्ताम्बूलादिस्वीकारः, तुतोष सन्तोषयामास । प्रीणयति स्मेति भावः । किम्भूतः ? दोषाणां कार्पण्य-कातर्य-कुशीलत्वाद्यगुणानां कृतो विहितो मोषोऽपनयनं येन स दोषकृतमोषः ॥ ८१

**गौर्जरविषये सकले कारितवान् यो विवेकपरिकलितः ।**
**जीववधव्यावृत्तिं कुमारभूपाल इव सदयः ॥ ८२**

**व्याख्या**—यः कडुआख्यो मन्त्री, सदयः कृपालुः, विवेकपरिकलितः सदसद्विवेचनं विवेकस्तेन परिकलितः सहितः सन्, सकले समस्ते, **गौर्जर**विषये गौर्जरदेशे, **कुमारभूपाल** इव कुमारनृपतिरिव, जीववधव्यावृत्तिं हिंसापरिहारं, कारितवान् कारयामास । **गौर्जरदेशे**ऽमार्युद्घोषणामकार्षीदिति भावः ॥ ८२

**श्रीसङ्घयुतः कृतवान् सुकृती श्रीतीर्थराजयात्रां यः ।**
**एवं पुण्यभराढ्यो जगाम तविषं विषयविमुखः ॥ ८३**

**व्याख्या**–यः सुकृती पुण्यवान्, श्रीकडुआख्यो मन्त्री, श्रीसङ्घयुतः श्रीसङ्घयुक्तः सन्, श्रीतीर्थराजयात्रां श्रीपुण्डरीकगिरियात्रां कृतवांश्चकार । एवं पूर्वोक्तप्रकारेण, विषयविमुखो विषयाः शब्दादयस्तेभ्यो विमुखो व्यावृत्तः सन्, पुण्यभरेण सुकृतसम्भारेणाऽऽढ्यः समृद्धः परिपूर्णः पुण्यभराढ्यः, तविषं स्वर्गं जगाम ॥ ८३

**तत्पुत्रो मेराख्यो हर्षमदेवी बभूव तत्पत्नी ।**
**निजपतिचेतोनुगता सदनुमता शीलगुणकलिता ॥ ८४**

**व्याख्या**–तस्य कडुआख्यमन्त्रिणः पुत्रस्तत्पुत्रो मेराख्यो मेराभिधो मन्त्री बभूव । तस्य मेराकस्य पत्नी भार्या हर्षमदेवीत्यभिधाना बभूव । किम्भूता? निजपतेरात्मीयभर्तुश्चेतोऽनुगता चित्तानुगामिनी भर्त्रनुकूलेत्यर्थः । यदुक्तम्–

'प्रीणाति यः सुचरितैः पितरं स पुत्रो, यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥' १

पुनः किम्भूता? सदनुमता सतां सत्पुरुषाणामनुमता सम्मता, सर्वेषामप्यौचित्यव्यवहारं नाऽतिक्रामतीत्यर्थः । पुनः किंविशिष्टा? शीलगुणकलिता शीलगुणेन कलिता सहिता ।

यतः–'शीलमेव कुलस्त्रीणामिहामुत्र च जीवितम् । शीले नष्टे पुनः प्राणी जीवन्नपि मृतोपमः ॥' इति ॥ ८४

**सप्तक्षेत्र्यां निजकं धनबीजं यः सदाऽपि वपति स्म ।**
**विस्मयकारी जातो जनेषु विनयोपचाराद्यैः ॥ ८५**

**व्याख्या**–यो मेराको मन्त्री सप्तानां क्षेत्राणां जिनभवनादिरूपकेदाराणां समाहारः सप्तक्षेत्री तस्यां, निजकं, स्वार्थे कः, आत्मीयं धनमेव बीजमङ्कुरकारणं वपति स्म, उवाप नियोजयामासेत्यर्थः । चेत्याकृष्यते । च पुनर्यो जनेषु, विनयोपचाराद्यैः विनयो नम्रता, उपचारो यथायोग्यमाराधना, तावाद्यौ येषां शौर्यधैर्यौदार्याणां तैर्विस्मयकार्याश्चर्यजनको जातः समभूत् ॥ ८५

**चक्रे क्रमात् स विक्रमभूपालसमानविक्रमाक्रान्तः ।**
**श्रीविमलाचलरैवतनगार्बुदादिषु परां यात्राम् ॥ ८६**

**व्याख्या**–क्रमात् क्रमेण, स मेराको मन्त्री, श्रीविमलाचल-रैवतनगार्बुदादिषु=श्रीविमलाचलः शत्रुञ्जयः, रैवतनगः उज्जयन्ताद्रिः, अर्बुदोऽर्बुदाचलः, त आदौ येषां स्तम्भनकादीनां तेषु तीर्थेषु, परां प्रधानां, यात्रामुत्सवं, चक्रे विदधौ । किम्भूतः? विक्रमभूपालस्य विक्रमादित्यराजस्य समानः सदृशो यो विक्रमः शौण्डीर्यं तेनाऽऽक्रान्त आश्रितो विक्रमभूपालसमानविक्रमाक्रान्तः ॥ ८६

**मन्त्रीशस्तीर्थकरं मुमोच न मुमोच जातु तीर्थकरम् ।**
**प्रददे सुगुप्तदानं विदधे स्वागमसुधापानम् ॥ ८७**

**व्याख्या**–मन्त्रीशो मेराख्यः, तीर्थस्य शत्रुञ्जयादिपुण्यक्षेत्रस्य, करं राजग्राह्यभागं, मुमोच–अमुञ्चत् । जातु कदाचिदपि, तीर्थकरमर्हन्तं न मुमोच । सर्वदाऽर्हत्स्मरणं विदधान इत्यर्थः । यो मन्त्री सुगुप्तदानं परालक्ष्यद्रव्यं, प्रददे ददौ । दीयत इति दानं देवद्रव्यमत्र गृह्यते । तथा सुष्ठ्वागमा जिनोक्तसिद्धान्ता एव सुधाऽमृतं तस्याः पानमत्यादरेण श्रवणं पानमुच्यते । तद्विदधे चकार ॥ ८७

**एवं पूर्णमनोरथमालः शुभभाग्यकलितवरभालः ।**
**अवमानितकलिकालः सुरोऽभवत् सचिवसुरसालः ॥ ८८**

**व्याख्या**–एवममुना प्रकारेण, पूर्णा समाप्तिमाप्ता मनोरथमाला तीर्थयात्राकरणाद्यभिलाषश्रेणिर्यस्य स पूर्णमनोरथमालः, सचिवसुरसालो मन्त्रिकल्पवृक्षो मेराख्यः, सुरो देवोऽभवत् । किम्भूतः? शुभभाग्येन शोभनभागधेयेन, कलितं सहितं, वरभालं

प्रधानललाटं यस्य स शुभभाग्यकलितवरभालः। पुनः किम्भूतः? अवमानितोऽवगणितः कलिकालो येन सोऽवमानितकलिकालः। कलावप्यर्थिन आहूय द्रव्यदानात् कृतयुगयोग्यकर्मकर्तेत्यर्थः।

यतः – 'आहूय च कृते दानं त्रेतायां गृहमागते। द्वापरे याचनादानं सेवादानं कलौ युगे ॥' ८८

**तत्पुत्रो गुणपात्रं माण्डणनामा समस्ति जनमान्यः।**
**महिमादेवीनाम्नी रामा तस्याभिरामाऽभूत् ॥ ८९**

**व्याख्या** – तस्य **मेराकस्य** पुत्रो **माण्डणनामा** समस्ति बभूव। अस्तीति तिङन्तप्रतिरूपकमव्ययम्। किम्भूतः? गुणानामौदार्यादीनां पात्रं भाजनम्। पुनः किम्भूतः? जनानां मान्यः सत्कारार्हो जनमान्यः। तस्य माण्डणस्य **महिमादेवी**-नाम्न्यभिरामा रमणीया रामा प्रमदाऽभूत् ॥ ८९

**श्रीजिनधर्मपरायणमतिरमितगुणः स तीर्थकृतयात्रः।**
**जीवदयामृतपात्रं याचकदारिद्र्यतृणदात्रम् ॥ ९०**

**व्याख्या** – स **माण्डणः**, श्रीजिनधर्मे श्रीजिनधर्मविषये, परायणा प्रवणा मतिर्बुद्धिर्यस्य स श्रीजिनधर्मपरायणमतिर्बभूवेति गम्यते। किम्भूतः? अमिता इयत्तयाऽगणिता गुणा विनयादयो यस्य सोऽमितगुणः। तथा तीर्थेषु **शत्रुञ्जया**दिपुण्यक्षेत्रेषु, कृता यात्रा उत्सवो येन स तीर्थकृतयात्रः। तथा जीवदयैवामृतं पीयूषं तस्य पात्रं भाजनम्, तथा याचकानामर्थिनां दारिद्र्यमेव तृणं, तत्र दात्रं लवित्रं, याचकदारिद्र्यतृणदात्रम्। यथा दात्रेण तृणं लूयते तथा येन दानेन याचकदारिद्र्यं लूनमित्यर्थः ॥ ९०

**संस्मृतपूर्वजभूमिस्त्यक्त्वा यो गौर्जरावनिं मानी।**
**वीरमपुरे निवासं चकार धृतसारपरिवारः ॥ ९१**

**व्याख्या** – यो **माण्डणः**, संस्मृता स्मृतिगोचरमागता पूर्वजानां **समधरा**दीनां भूमिरवस्थानक्षेत्रं यस्य स संस्मृत-पूर्वजभूमिः, गौर्जरावनिं **गौर्जरभूमिं**, त्यक्त्वा परित्यज्य, धृतः स्वीकृतः सारः प्रकृष्टः परिवारो बन्ध्वादिपरिच्छदो येनैवंविधः सन्, **वीरमपुरे महेवा**परनामनगरे, निवासमवस्थानं चक्रे व्यधात्। किम्भूतो? मानी मानश्चित्तोन्नतिरस्यास्तीति मानी ॥ ९१

**जिनपूजनसामायिकपौषधकृत्यैर्विशुद्धचेतस्कः।**
**दानप्रीणितलोकः समभूत् सम्प्राप्तसुरलोकः ॥ ९२**

**व्याख्या** – स इति गम्यते, स **माण्डणो** जिनानां यत्पूजनकृत्यं सामायिककृत्यं पौषधकृत्यं च, द्वन्द्वान्ते श्रूयमाणः कृत्यशब्दः सर्वत्र योज्यते। तैः कृत्वा, विशुद्धं विमलं चेतश्चित्तं यस्य स विशुद्धचेतस्कः, सम्प्राप्तो लब्धः सुरलोकः स्वर्गो येनेत्येवंविधः समभूज्जातः। स्वर्ययावित्यर्थः। किम्भूतः? दानेन वितरणेन प्रीणितः प्रमोदितो लोको याचकजनो येन स दानप्रीणितलोकः ॥ ९२

**तस्य सुतोऽभूत् पूतः सद्वंशसमुद्भवैर्नरैर्नूतः।**
**ऊदाह्वः सुविवेकी गुरुवचनाम्भोदवरकेकी ॥ ९३**

**व्याख्या** – तस्य माण्डणस्योदाह्व ऊदाख्यः सुतोऽभूत्। किम्भूतः? पूतः पवित्रः। पुनः किम्भूतः? सद्वंशे शोभना-न्वये समुद्भवा जाताः सद्वंशसमुद्भवाः, तैर्नरैः पुरुषैर्नूतः स्तुतः। णूत् स्तवने। पुनः किम्भूतः? सुविवेकी शोभनविवेकवान्। पुनः किम्भूतः? गुरुवचनमेवाऽम्भोदो मेघस्तत्र वरकेकीव प्रधानबर्हीव गुरुवचनाम्भोदवरकेकी। यथा केकी घनध्वनिं श्रुत्वा हृष्यति तथा गुरुवचनश्रवणात् तुष्यतीति।

यतः – 'स्त्रियस्तुष्यन्ति जारेण पांसुस्नानेन कुञ्जराः। गावो दूरप्रचारेण मयूरा घनगर्जितैः ॥' ९३

**गुणरञ्जितभूवलया सत्कलयाऽलङ्कृता कृपानिलया।**
**निम्नीकृतरतिरूपा नाम्ना उछरङ्गदेवीति ॥ ९४**

व्याख्या – तस्येति गम्यते । तस्य उदाकस्य उछरङ्गदेवीति नाम्ना रामाऽभूदित्यध्याह्रियते । किम्भूता ? गुणैः सुशीलत्वादिभी रञ्जितमावर्जितं भूवलयं धरामण्डलं यया सा गुणरञ्जितभूवलया । तथा सत्या शोभनया कलया विज्ञानेनाऽलङ्कृता विभूषिता । तथा निम्नीकृतमधरीकृतं, निजरूपेण रतेः कामकान्तायाः, रूपं सौन्दर्यं यया सा निम्नीकृतरतिरूपा ॥ ९४

**समभूतां तत्तनयौ सनयौ नरपाल-नागदेवाख्यौ ।**
**उपगुरुगृहीतविद्यौ सद्यःसन्त्रासितावद्यौ ॥ ९५**

व्याख्या – तस्य उदाख्यस्य मन्त्रिणस्तनयौ पुत्रौ तत्तनयौ, नरपाल-नागदेवाख्यौ नरपाल-नागदेवनामानौ, समभूतामभवताम् । किम्भूतौ ? सनयौ नयो नीतिस्तत्सहितौ सनयौ । तथोपगुरुः गुरोः समीपे, गृहीता स्वीकृता, विद्या मातृकादिपाठो, याभ्यां तौ । गुरुं विनाऽधीता हि विद्या न यशस्करी भवति ।

यतः – 'नहि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानम् । प्रकटितपश्चाद्भागं पश्यत नृत्यं मयूरस्य ॥'

तथा सद्यस्तत्क्षणात्, सन्त्रासितं दूरीकृतमवद्यं दूष्यं पापं याभ्यां तौ सन्त्रासितावद्यौ । 'अवद्यपण्यवर्यगर्ह्यपणितव्यानिरोधेषु' इत्येते यदन्ता निपात्यते गर्ह्याद्यर्थे । अवद्यमनिष्टम् । नरपालादियं जाणाणी शाखा समभूदिति श्रुतिः ॥ ९५

**इह नागदेवपत्नी नवरं नवरङ्गदा सदा पत्यौ ।**
**सदपत्या धृतसत्या बभूव नारिङ्गदेवीति ॥ ९६**

व्याख्या – इह वंशे नागदेवस्य पत्नी नारिङ्गदेवीति बभूव । नवरं केवलं, सदा पत्यौ भर्तरि, नवं रङ्गं नृत्यभूमिं ददातीति नवरङ्गदा प्रमोदाद्वैतजनिकेत्यर्थः । 'रङ्गः स्यान्नृत्तयुद्धवोः, रागे' इति । पुनः किम्भूता ? सदपत्या सच्छोभनमपत्यं सन्तानो यस्याः सा सदपत्या । तथा धृतं सत्यं सद्भूतं यया सा धृतसत्या सत्यवचनवादिनीत्यर्थः । 'णवरं केवले' केवलेऽर्थे णवरमिति प्रयोक्तव्यम् । प्राकृतेऽव्ययाधिकारे । नवरमिति संस्कृते जैनागमप्रसिद्धम् ॥ ९६

**पुत्रौ जेसल-वीरमनामानौ तस्य भाग्यसौभाग्ये ।**
**मन्ये मूर्तिमती इव सञ्जातौ जातुचिदवियुतौ ॥ ९७**

व्याख्या – तस्य नागदेवस्य, जेसल-वीरमनामानौ पुत्रौ सञ्जातावुत्पन्नौ । मन्ये शङ्के, मूर्तिमती मूर्ते भाग्यसौभाग्ये भाग्यं च भागधेयं, सौभाग्यं च चक्षुष्यता सुभगता ते इव । एतत्पुत्रद्वयव्याजेन मूर्ते भाग्यसौभाग्ये स्तः । किम्भूतौ ? जातुचित् कदाचिदपि, अवियुतौ न वियुक्तौ । जात्विति कदाचिदर्थे । तयोर्मध्ये वीरमात् 'डुङ्गराणी' शाखा प्रवृत्तेति प्रवादः ॥ ९७

**जेसलभार्यौदार्यात् कल्पलतेवाऽभवन्महीवलये ।**
**जसमादेवीत्यभिधा विशुद्धकुलजातिसम्भूता ॥ ९८**

व्याख्या – तत्र जेसलस्य भार्या वधूर्जसमादेवीत्यभिधाऽभवत् । किम्भूता ? महीवलये भूमण्डल औदार्यादुदात्ततया कल्पलतेव कल्पवल्लीव । पुनः किम्भूता ? विशुद्धं विमलं यत्कुलं पितृसमुत्थं जातिर्मातृकपक्षः । 'ऋतष्ठञ्' सूत्रुञोऽपवादो हौतृकं मातृकं पैतृकम् । तत्र सम्भूता जाता । तज्जाता हि सन्ततिः प्रतिपन्ननिर्वाहिका भवतीति कुलजातिविशुद्धेर्भणनम् ॥ ९८

**तत्पुत्राः सुपवित्रास्त्रयोऽभवंस्तेषु वत्सराजाख्यः ।**
**प्रथमोऽथ देवराजो गुणाद्वितीयो द्वितीयोऽभूत् ॥ ९९**

व्याख्या – तस्य जेसलस्य पुत्रास्तत्पुत्राः, सुपवित्रा अतिशयेन पावनाः, त्रयोऽभवन् बभूवुः । तेषु पुत्रेषु मध्ये वत्सराजाख्यो वत्सराजनामा पुत्रः प्रथमोऽभूत् । अथेति मङ्गलार्थः । द्वितीयो देवराजोऽभूत् । किम्भूतः ? गुणैरद्वितीयोऽसमोऽनन्यसाधारणगुणवानित्यर्थः ॥ ९९

**पुत्रोऽथ हंसराजो विराजितो राजहंस इव नव्यः ।**
**भव्यस्तृतीय एवं त्रयोऽपि वर्गा इव प्रथिताः ॥ १००**

व्याख्या – अथेति समुच्चये, राजहंस इव विराजितो विराजमानो, हंसराजस्तृतीयः पुत्रोऽभूत्। किम्भूतः? नव्यः स्तवनीयः, तथा भव्यो योग्यः। एवममुना प्रकारेण त्रयोऽपि पुत्राः, वर्गा धर्मार्थकामा इव प्रथिता विश्रुताः। 'भव्यं फले योग्ये शुभे' इत्याद्यनेकार्थः॥ १००

**पुण्येन वर्द्धमानाः सदाऽसमाना गुणैरसंख्येयैः।**
**लोकत्रयेऽपि चित्रं चित्रमकार्षीत् तदन्यतरः॥ १०१**

व्याख्या – ते त्रयोऽपि पुत्राः, पुण्येन पूर्वसुकृतेन वर्द्धमाना वृद्धिमासादयन्तः, सदा नित्यमसंख्येयैरगण्यैर्गुणैर्दाक्षिण्य-नैपुण्यादिभिः, असमाना अपरेषामसदृशाः, रेजुरिति गम्यते। चित्रमद्भुतमेतद्यत् तदन्यतरोऽपि तेषां त्रयाणामपि मध्येऽन्यतरोऽप्येकोऽपि लोकत्रये स्वर्गमर्त्यपातालेषु, चित्रमाश्चर्यकारि कर्माऽकार्षीच्चकार। त्रयश्चेत्रिलोक्यां चित्रं यदि कुर्युस्तदा किमपि न चित्रं परं तेषां मध्येऽन्यतरोऽप्येवं लोकत्रये चित्रमकार्षीदेतच्चित्रम्। 'चित्रं खे तिलकेऽद्भुते, आलेख्ये कर्बुरे' इति॥ १०१

**मन्त्रीशवत्सराजः सबान्धवो वत्सराज इव नव्यः।**
**सुभटपुरे रिणमल्लस्वामिसमीपे निवसति स्म॥ १०२**

व्याख्या – मन्त्रीशवत्सराजः, सबान्धवः स्वजनपरिकलितः, सुभटपुरे योधपुरे, रिणमल्लस्वामिसमीपे रिणमल्ल-राजसविधे, निवसति स्म निवासमकार्षीत्। किम्भूतः? नव्यो नवीनो वत्सराज इव वत्सराजो लोकप्रसिद्धः, तद्वत्तथाविध-कर्मनिर्वाहकत्वाद् वत्सराजोपमानमस्य भणितम्॥ १०२

**चित्रकूटेऽन्यदा हृद्यकूटः सेवाचिकीर्गतः।**
**रिणमल्लो हतस्तत्र राज्ञा कुम्भेन कैतवात्॥ १०३**

व्याख्या – अन्यदाऽन्यस्मिन् काले, हृदि हृदयेऽकूटो निर्दम्भः, सेवाचिकीः सेवां कुम्भस्य प्रसादनां, चिकीर्षतीति सेवाचिकीः सेवां कर्तुकामो, रिणमल्लो नृपश्चित्रकूटे गतः। तत्र चित्रकूटे, राज्ञा कुम्भेन, कैतवात् कपटाद्धतो मारितः। किञ्चिन्मिषं विधाय ततो भयमाशङ्क्य निश्येव सुप्तं रिणमल्लं घातयामासेत्यर्थः॥ १०३



**हते राज्ञि निजे देशे ज्ञात्वा योधाधिपो भयम्।**
**अवरोधादिकं लात्वा ससैन्यो जङ्गलेऽगमत्॥ १०४**

व्याख्या – राज्ञि रिणमल्लनृपे हते निहते सति, योधाधिपो योधाख्यो भूपः, अन्तरागतदुर्वारवैरिवारमपास्य समागतः सन् निजे देशे, भयं पश्चादागतकुम्भसेनाया भीतिं, ज्ञात्वाऽवगम्य, अवरोधादिकमन्तःपुराद्यम्, आदिग्रहणात् कोशादिकं लात्वा गृहीत्वा, ससैन्यः सबलो जङ्गले निर्जलदेशेऽगमज्जगाम॥ १०४

**तत्र राजन्यकार्याणि वत्सराजोऽखिलान्यपि।**
**विधाय मानसं राज्ञो वशीचक्रे तदा वशी॥ १०५**

व्याख्या – तत्र जङ्गले वत्सराजो मन्त्री, अखिलान्यपि समस्तान्यपि, राजन्यकार्याणि राजन्यस्य रिणमल्लाख्यक्षत्रियस्य यानि कार्याणि देयदानादिकर्माणि, विधाय कृत्वा, राज्ञो योधाह्वनृपतेर्मानसं चेतस्तदा तस्मिन् प्रस्तावे, वशीचक्रे स्वाधीनं चकार। आत्मवशो विहित इत्यर्थः। किम्भूतः? वत्सराजो वशी जितेन्द्रियः। राज्ञो जात्यपत्यं राजन्यः। 'राज्ञो जातौ यत्'॥ १०५

**पुनर्योधाधिपः सेनां सज्जीकृत्यातिसाहसी।**
**वैरिरन्ध्रावलोकित्वाच्चित्रकूटं गतोऽन्यदा॥ १०६**

व्याख्या – पुनर्भूयो योधाधिपो नृपः, सेनां सैन्यं, सज्जीकृत्य सन्नद्धां विधाय, अन्यदाऽन्यस्मिन् काले, अतिसाहसी साहसं दुष्करकर्म धार्ष्ट्यं वा, अतिशायि साहसं यस्यासावतिसाहसी, एवंविधः सन्, चित्रकूटं गतः प्राप्तः। कस्माद्? वैरि-रन्ध्रावलोकित्वाद् वैरिणां यद् रन्ध्रं छिद्रं तद्विघातावसर इत्यर्थः, तदवलोकत इत्येवंशीलो वैरिरन्ध्रावलोकी तद्भावस्तत्त्वं तस्मात्।

स्वप्रबलबलमुपादाय, वैरिनिर्यातनाय छलमवलोक्य, योधाधीशश्चित्रकूटे गत इत्यर्थः । 'साहसं तु दमे दुष्करकर्मणि, अविमृश्य कृतौ धार्ष्ट्ये' इत्यनेकार्थः ॥ १०६

**विजित्य रानकाधीशं मेदपाटं निहत्य च ।**
**जयमासाद्य सद्योधो योधो योधपुरे ययौ ॥ १०७**

**व्याख्या**–योधो योधाख्यो नृपो, रानकाधीशं कुम्भं विजित्य, च पुनर्मेदपाटं मेदपाटाख्यदेशं निहत्य हत्वा, जयं विजयमासाद्य प्राप्य, सद्योधः सत्सुभटपरिवृतो योधपुरे ययौ जगाम ॥ १०७

**गतां भूमिं समासाद्य मुदितो मेदिनीपतिः ।**
**अनीनयत् पुरा मुक्तावरोधं जङ्गलादसौ ॥ १०८**

**व्याख्या**–असौ मेदिनीपतिर्नृपो योधो, गतां वैरिकरप्राप्तां भूमिं, समासाद्य लब्ध्वा, मुदितो हृष्टो, जङ्गलात् पुरा पूर्वं मुक्तः प्रेषितो जङ्गलं प्रति योऽवरोधोऽन्तःपुरं तमनीनयदानाययति स्म ॥ १०८

**विक्रम-वीदानामकजातयुता साङ्खलाह्वगोत्रीया ।**
**नवरङ्गदेऽभिधाना जज्ञे राज्ञः पुरा पत्नी ॥ १०९**

**व्याख्या**–राज्ञो योधस्य, नवरङ्गदेऽभिधाना नवरङ्गदेनाम्नी पत्नी भार्या, पुरा पूर्वं जज्ञे बभूव । किम्भूता ? विक्रम-वीदानामकौ यौ जातौ पुत्रौ ताभ्यां युता सहिता । पुनः किम्भूता ? साङ्खलाह्वगोत्रीया साङ्खलाख्यगोत्रोत्पन्ना ॥ १०९

**नीम्बा-सूजा-सातलनामसुतत्रययुता महाराज्ञी ।**
**जसमादेवीनाम्नी राज्ञो जीवस्य सर्वस्वम् ॥ ११०**
**नीम्बाख्ये सञ्जाते दैवनियोगात् सुते कथाशेषे ।**
**जातिस्वभावदोषाज्जातामर्षा सपत्नीषु ॥ १११**
**विक्रमनाम्नि सपत्नीसुते सति स्वात्मजे कथं राज्यम् ।**
**भावीति विभाव्याऽऽत्मनि विजने राजानमाचष्ट ॥ ११२** –त्रिभिर्विशेषकम् ।

**व्याख्या**–राज्ञो योधस्य, जसमादेवीनाम्नी हाडीगोत्रीया महाराज्ञी । विजने रहसि, इति वक्ष्यमाणमात्मनि हृदि विभाव्य विचार्य, राजानं योधमाचष्ट कथयामास । इतीति किं ? विक्रमनाम्नि सपत्न्या नवरङ्गदेनाम्न्याः सुते सति, कथं स्वात्मजे स्वपुत्रे राज्यं भावि ? । किम्भूता ? जीवस्य नृपात्मनः सर्वस्वं सर्वधनं, तस्य तदधिकं न किमप्यस्तीत्यर्थः । पुनः किम्भूता ? नीम्बा-सूजा-सातलनामयुत् सुतत्रयं तेन युताऽन्विता । पुनः किम्भूता ? दैवनियोगाद् विधेर्वशात्, नीम्बाख्ये सुते कुमारे, कथाशेषे नामशेषे सञ्जाते सति, मृते सतीत्यर्थः । जातेः स्त्रीजातेर्यः स्वभाव आत्मीया प्रकृतिर्यदन्यस्या असहनं स एव दोषोऽगुणस्तस्माज्जातिस्वभावदोषात् । सपत्नीषु पतेरन्यासु स्त्रीषु जातोऽमर्षो यस्याः सा जातामर्षा । सपत्नीछिद्रान्वेषणपरेत्यर्थः ।

यतः–वरं रङ्ककलत्रत्वं वरं वैधव्यवेदना । वरमरण्यवासो वा मा सपत्न्याः पराभवः ॥ १

वरं गेहत्यागो वरमुरुविरागो भवसुखे, वरं क्ष्वेडग्रासो वरमभिनिवासो वनभुवि ।
वरं कण्ठे पाशो वरमखिलनाशो मृगदृशां, न तु प्रेयान् दृष्टः कथमपि सपत्नीपरवशः ॥ २

भौमे मङ्गलनाम विष्टिकरणे भद्रा कणानां क्षये, वृद्धिः शीतलिकाऽतितीव्रपिटके राजा रजःपर्वणि ।
मिष्टाख्या लवणे विषे मधुरता जामिः सपत्न्यां पुनः, पात्रत्वं च पणाङ्गनासु विदितं नाम्ना परं नाऽर्थतः ॥' ३

क्रोधाज्जातो जिगीषोत्साहयुक्तो गुणोऽमर्षः ॥ ११२

**ततो निजात्मजं जायामायया मोहितोऽधिपः ।**
**विक्रमं जङ्गले मोक्तुं समाहूयेदमुक्तवान् ॥ ११३**

**व्याख्या**—ततोऽनन्तरमधिपो **योधनृपो**, जायाया जसमादेवीनामभार्याया मायया शठतया, मोहितो मोहो मौढ्यं जातोऽस्येति मोहितो जायामायामोहितः सन्, निजात्मजं स्वसूनुं **विक्रमं** जङ्गले **जङ्गलदेशे**, मोक्तुं प्रेषितुं समाहूयाऽऽकार्येदं वक्ष्यमाणमुक्तवानचीकथत् ॥ ११३ अथ तदेवाऽऽह—

**भुनक्ति यः पितू राज्यं किं चित्रं तत्र नन्दन! ।**
**नवं राज्यं य आदत्ते स धत्ते सुतधुर्यताम् ॥ ११४**

**व्याख्या**—हे नन्दन! पुत्र! यः सुतः पितुर्जनकस्य राज्यं भुनक्ति पालयति, 'भुजोऽनवने' इति परस्मैपदम्, तत्र पितृराज्यभोगे किं चित्रमाश्चर्यम्। यः पुत्रो नवं राज्यमादत्ते गृह्णाति, स पुत्रः सुतेषु धुर्यता धौरेयता तां धत्ते धारयति॥ ११४

**तेन देशोऽस्ति दुःसाध्यो जङ्गलो जगतीतले ।**
**त्वं साहसीति कृत्येऽस्मिन् नियुक्तोऽसि मयाऽधुना ॥ ११५**

**व्याख्या**—हे सुत! तेन कारणेन, इतिहेतोः अस्मिन् जङ्गलग्रहणरूपे कृत्ये कार्ये, त्वमधुना साम्प्रतं, नियुक्तोऽसि न्यस्तोऽसि। इतीति किं? **जङ्गलो** देशो जगतीतले दुःसाध्योऽस्ति साधयितुं ग्रहीतुमशक्योऽस्ति। त्वं च साहसी साहसवान्। यो हि साहसिको भवति स किल दुःसाध्यकृत्यानि कर्तुं प्रभवति॥ ११५

**राज्यश्रीः पितृभुक्ता जननी पुत्रस्य तातसञ्जनिता ।**
**सा भगिनीति विदित्वा पितुराज्ञाऽङ्गीकृताऽनेन ॥ ११६**

**व्याख्या**—अनेन **विक्रमकुमारेण**, इति वक्ष्यमाणं विदित्वा ज्ञात्वा, पितुर्योधनृपस्य आज्ञा आदेशोऽङ्गीकृता स्वीचक्रे। इतीति किं? पितृभुक्ता जनकसेविता राज्यश्री राज्यलक्ष्मीः पुत्रस्य जननी मातेव। तातसञ्जनिता पित्रुत्पादिता सा राज्यश्रीर्भगिनी सोदरी॥ ११६

**वत्सराजो मया मन्त्री प्रेषितोऽस्ति त्वया सह ।**
**न मन्त्रिणं विना राज्यं यतो वृद्धिमवाप्नुयात् ॥ ११७**

**व्याख्या**—हे कुमार! त्वया समं मया **वत्सराजो** मन्त्री सचिवः, प्रेषितोऽस्ति मुक्तोऽस्ति। यतो यस्मान्मन्त्रिणं विना राज्यं न वृद्धिं वर्द्धनमवाप्नुयात् प्राप्नुयात्। मन्त्रिणं विना न राज्यं वर्द्धत इत्यर्थः। यतः—

'दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति, नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम्।
रत्नावलीं जलधयो जनयन्ति किन्तु, संस्कारमत्र मणिकारगणः करोति॥' ११७

**आपातकटुकाऽप्यस्य शिक्षाऽऽयतिगुणावहा ।**
**त्वयाऽङ्गीकरणीयैव रोगिणेव प्रतिक्रिया ॥ ११८**

**व्याख्या**—हे कुमार! त्वयाऽस्य मन्त्रिणः, शिक्षा हितोपदेशः, आपाते मुखे कटुकाऽपि विरसाऽपि, आयतावागामिनि काले, गुणानावहति धत्त इत्यायतिगुणावहा, अङ्गीकरणीयैव स्वीकार्यैव। केन केव? रोगिणा सामयेन प्रतिक्रियेव चिकित्सेव। यथा रोगिणा चिकित्सा कटुकपानादिरूपा मुखे विस्वादाऽपि भविष्यत्काले गुणकारिणीति स्वीक्रियते तथा त्वयाऽपि स्वीकरणीयेति॥ ११८

**वत्सराजमिति प्रोचे त्वदङ्के निहितो मया ।**
**कुमारो विक्रमाख्योऽयं वर्द्धनीयो विशेषतः ॥ ११९**

**व्याख्या**—**योधनृपेण वत्सराजं** मन्त्रिणमिति प्रोचेऽभाणि। इतीति किं? हे मन्त्रिन्! मयाऽयं **विक्रमाख्यः** कुमारस्त्वदङ्के त्वदुत्सङ्गे निहितः स्थापितः। परं त्वया विशेषतो विशेषेण राज्यादिसम्पत्त्या वर्द्धनीय आधिक्यं नेतव्यः॥ ११९

**इति शिक्षां पितुर्धृत्वा प्रतस्थे राजसूस्ततः ।**
**प्रशस्तदिवसेऽन्येद्युः ससैनः शकुनैः शुभैः ॥ १२०**

**व्याख्या**—इति पूर्वोक्तप्रकारेण, पितुर्योधभूधवस्य शिक्षां धृत्वा, शिरसि शेषामिव निधाय, राजसूर्नृपपुत्रो **विक्रम**स्ततो **योधपुराद**न्येद्युरन्यस्मिन् काले, प्रशस्तदिवसे पञ्चम्यादिपूर्णतिथौ, **शुभैर्विजयकारिभिः शकुनैः, ससेनः** सेनासहितः, **प्रतस्थे** चचाल। 'शकुनं स्याद्दैवशंसिनिमित्ते शकुनः खगे।' इत्यनेकार्थः ॥ १२०

**वत्सराजकृतोत्साहो हित्वा पितृधरां क्रमात्।**
**काहूनीस्थानमध्यास्त कुमारो विक्रमाधिकः ॥ १२१**

**व्याख्या**—कुमारो **विक्रमो**, वत्सराजेन मन्त्रिणा कृत उत्साहो नव्यधरास्वीकरणोद्यमो यस्मिन् स वत्सराजकृतोत्साहो नव्यधरां गृहीतुं वत्सराजोक्त्या धृतोद्यम इत्यर्थः। पितृधरां **योध**नृपभूमिं हित्वा त्यक्त्वा, क्रमाद् गमनपरिपाट्या **काहूनी**स्थानमध्यास्त अधिवसति स्म अधितष्ठौ। किम्भूतः? विक्रमेण पराक्रमेणाऽधिकोऽतिशायी कुमारो युवराजः। 'कुमारोऽश्वानुचारके। युवराजे शिशौ स्कन्दे शुके वरुणपादपे' इत्यनेकार्थः। काहूनीस्थानमध्यास्तेत्यत्र 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मता। अधिशेतेऽधितिष्ठत्यध्यास्ते वा वैकुण्ठं हरिरितिवत् ॥ १२१

**किमसाध्यं समर्थानामिति सत्या जनोक्तयः।**
**कृता येन परां भूमिं गच्छता सत्त्वशालिना ॥ १२२**

**व्याख्या**—येन **विक्रमेण** परां स्वपितृभूमेरन्यां भूमिं गच्छता सता, समर्थानां शक्तिमतां किमसाध्यं किं साधयितुमशक्यं किमग्राह्यं? इति यावत् इति जनोक्तयो लोकोक्तयः, सत्या अवितथाः कृताः। अनेनाप्यसाध्यदेशसाधनं विदधे। तेनेमानि जनवचांसि सत्यीकृतानीति भावः। किम्भूतेन? सत्त्वशालिना सत्त्वं व्यवसायोऽतिशयवद्वीर्यमवष्टम्भ इति यावत्, तच्छालते श्लाघत इत्येवंशीलः सत्त्वशाली तेन। 'सत्त्वं द्रव्ये गुणे चित्ते, व्यवसायस्वभावयोः' इत्यादि ॥ १२२

**वत्सराजोऽपि धुर्योऽभूद् विक्रमाश्रयणादिह।**
**तद्देशमात्मसाच्चक्रे सत्यसन्धः क्रमादसौ ॥ १२३**

**व्याख्या**—इह **जङ्गले** विक्रमाश्रयणाद् विक्रमो **विक्रमकुमारः**, पक्षे विक्रमः पराक्रमस्तदाश्रयणात् तदङ्गीकाराद् **वत्सराजो**ऽपि, धुर्यो धौरेयः प्रतिपन्ननिर्वाहकोऽभूद् बभूव। धुरं वहति धुर्यः। 'धुरो यड्ढकौ' इति यत्। क्रमात् क्रमेणाऽसौ वत्सराजस्तद्देशं जङ्गलदेशमात्मसात् स्वायत्तं चक्रे चकार। किम्भूतः? सत्यसन्धः सत्या अवितथा सन्धा प्रतिज्ञा यस्य स सत्यसन्धः। 'सन्धा स्थितिप्रतिज्ञयोः' इत्यनेकार्थः ॥ १२३

**दुर्दान्तमौलभूमीशान् निर्वास्य स ततोऽखिलान्।**
**गजाश्वादिबलं देशात् सज्जीचक्रे बलाद्बली ॥ १२४**

**व्याख्या**—ततस्तस्माद्देशाज्जङ्गलदेशात् स वत्सराजो, बलाद्धठाद्, दुर्दान्ता दुःखेन दमनीया अत्युग्रा इत्यर्थः। ये मौलभूमीशास्तद्देशनिवासिनृपास्तान्निर्वास्य निष्कास्य, गजाश्वादिबलं गजवाजिप्रमुखसैन्यं सज्जीचक्रे सावधानीचकार। किम्भूतः? बली बलं स्थाम अस्या अस्तीति बली। 'बलं रूपे स्थामनि स्थौल्यसैन्ययोः' इत्यादि ॥ १२४

**शूरमण्डलसम्पर्काद् राजेवायं सुराजसूः।**
**दिने दिने परां प्रापोन्नतिं प्राप्तो परां दिशम् ॥ १२५**

**व्याख्या**—अयं सुराजसूः शोभनो राजा सुराजो **योधाभिधो** भूधवः स सूते यं स सुराजसूः। 'सत्सूद्विषे'ति क्विप्। **विक्रमः** शूरमण्डलसम्पर्कात् शूराणां वीराणां यन्मण्डलं समूहस्तस्य सम्पर्कात् संयोगात्, दिने दिनेऽपरां दक्षिणदिशोऽन्यां दिशमुदीचीं प्राप्तः सन् परामुत्कृष्टामुन्नतिमुदयं प्राप। क इव? राजेव चन्द्र इव। यथा राजा शूरमण्डलसम्पर्कात् सूर्यमण्डलसंयोगतोऽपरां पश्चिमां दिशं प्राप्तः सन् दिने दिने परामुन्नतिं प्राप्नोति। चन्द्रो हि दर्शे रविणा संयुज्यते, तत्र कविकल्पनेयम्—चन्द्रः कलाविकलः सन्नमावास्यायां रविमुपससर्प। प्रोक्तं चन्द्रेण हे रवे! त्वं सहस्रकरोऽसि मां दुःस्थमनुगृहाण। ततो रविणा स्वगृहागतं क्षीणकलं शशिनं विलोक्योपकृतये स्वघृणिर्ददे, ततः शुक्लद्वितीयादिषु दिदीपे चन्द्रः ॥ १२५

**रोहिणीवाऽभवद् राज्ञो रङ्गादेवीति सुन्दरी ।**
**चित्रं नक्षत्रवंश्या सा क्षत्रवंश्येयमद्भुता ॥ १२६**

**व्याख्या** – राज्ञो **विक्रमस्य रङ्गादेवी**ति सुन्दरी रामा अभवत् । केव ? रोहिणीव । यथा रोहिणी ब्राह्मी राज्ञश्चन्द्रस्य सुन्दरी । चित्रमाश्चर्यं यत् सा रोहिणी नक्षत्रवंश्या नक्षत्रवंशोत्पन्ना, इयं रङ्गादेवी अद्भुता आश्चर्यकारिणी क्षत्रवंश्या क्षत्रवंशोत्पन्ना । आश्चर्योल्लेखस्त्वयम् – इयमपि राजपत्नी रोहिण्यपि राजपत्नी परमियं क्षत्रवंश्या सा न-क्षत्रवंश्या । वस्तुतस्तु नक्षत्रं तारा तद्वंश्या । वंशे साधुर्भवो वा वंश्यः ॥ १२६

**तस्याभूवन् जगत्ख्याताः सुता शूरत्वशालिनः ।**
**लूणकर्णो नरो राजा घडसी वीसलादयः ॥ १२७**

**व्याख्या** – तस्य **विक्रम**भूपतेर्जगति विष्टपे, ख्याताः विश्रुताः, सुताः पुत्रा वक्ष्यमाणा अभूवन् । किम्भूताः ? शूरत्वं शौर्यं शालन्ते श्लाघन्त इत्येवंशीलाः शूरत्वशालिनः । तानेवाऽऽह – **लूणकर्णो नरो** राजा **घडसी वीसलादयः** । आदिशब्दा**न्मेघ-केल्हणौ** ॥ १२७

**निवासार्थं नृपस्याऽथ कारितं शुभवासरे ।**
**दुर्गं दौरात्म्यदुर्वारवैरिवारनिवारकम् ॥ १२८**

**व्याख्या** – अथाऽनन्तरं नृपस्य **विक्रमस्य** निवासार्थं निवासकृते, शशिजलराशिशरचन्द्र १५४१ प्रमितवत्सरे, **वत्सराजेन** शुभवासरे शुभाहे दुर्गं कोट्टः कारितम् । पुनः किम्भूतं ? दौरात्म्येन दौष्ट्येन दुर्वारं वारयितुमशक्यं यद्वैरिवारं शत्रुवृन्दं तन्निवारकं तन्निषेद्धृ दौरात्म्यदुर्वारवैरिवारनिवारकम् ॥ १२८

**नगरं वासयाश्चक्रे परितस्तस्य पावनम् ।**
**मन्त्रिसामन्तसद्वीरलोकमन्दिरसुन्दरम् ॥ १२९**
**सौराज्यरञ्जितामितवणिग्जनानीतपण्यसम्भारैः ।**
**परिपूर्णाभिः सततं विपणश्रेणीभिराकीर्णम् ॥ १३०**
**कोडिमदेसरकोडिमदेसर इति नामतः समाख्यातम् ।**
**विलसद्विबुधविराजितमर्हद्भवनश्रिया ख्यातम् ॥ १३१** – त्रिभिर्विशेषकम् ॥

**व्याख्या** – तस्य कोट्टस्य, परितः सर्वतः, पावनं पवित्रं पवित्रजनसंवासान्नगरस्याऽपि पावित्र्यं, **कोडिमदेसर** कोडिमदेसर इति नामतः समाख्यातं कथितं नगरं वासयाञ्चक्रे । कोट्टस्य परितो नगरनिवेशश्चक्रे । किम्भूतं ? मन्त्रिणो धीसखाः, सामन्तास्त्रिचतुरदेशाधिपतयः, सद्वीराः शोभनशूराः लोकाः सामान्यजनास्तेषां यानि मन्दिराणि सदनानि तैः सुन्दरं चारु । पुनः किम्भूतं ? सौराज्येन शोभनराजतया, रञ्जिता आवर्जिता अमिता इयत्तयाऽपरिच्छेद्या गणनातीता इति यावत्, ये वणिग्जनाः, तैरानीतानि देशान्तराड्ढौकितानि, यानि पण्यानि विक्रेयवस्तूनि तेषां ये सम्भाराः समूहास्तैः परिपूर्णाभिर्भृताभिर्विपणिश्रेणीभिर्हट्टराजिभिः, सततं नित्यमाकीर्णं व्याप्तम् । पुनः किम्भूतं ? विलसन्तो विद्यया विराजमाना ये विबुधाः पण्डितास्तैर्विराजितं शोभितम् । तथा अर्हद्भवनश्रिया जिनचैत्यलक्ष्म्या ख्यातं विश्रुतम्, यत्र बहूनि जिनचैत्यानि सन्तीत्यर्थः ॥ १२९ – १३१

**विबुधगुरोः सान्निध्यान्माहात्म्यं मन्त्रिणो महज्जज्ञे ।**
**विबुधगुरोः सान्निध्याल्लग्नस्येवातिशुद्धस्य ॥ १३२**

**व्याख्या** – मन्त्रिणो वत्सराजस्य, विबुधगुरोः पण्डितगुरोः श्री**सोमसुन्दर**वाचकस्य, सान्निध्यात् प्रभावात्, महदधिकं माहात्म्यं महिमा जज्ञे बभूव । तेन गुरुणा यद्यदस्मै मन्त्रिणे प्रोक्तं तत्तत् समाचरन्नसौ परां प्रौढिं प्राप्तवानिति भावः । कस्य कस्मादिव ? विबुधगुरोः सान्निध्यादतिविशुद्धस्य लग्नदोषरहितस्य लग्नस्येव । राशीनामुदयो लग्नम् । यथा अतिविशुद्धस्य लग्नस्य

विशिष्टबुधेन सहितो यो गुरुर्बृहस्पतिस्तस्य। शाकपार्थिवादित्वान्मध्यपदलोपी समासः। यद्वा विबुधा देवास्तेषां गुरुराचार्यो बृहस्पतिस्तस्य सान्निध्यात्। केन्द्रे सन्निधानान्महन्माहात्म्यं दोषक्षयलक्षणं भवति। यदुक्तं **रत्नमालायाम्**—

'दोषाणां शतमपहन्ति सोमपुत्रः, केन्द्रस्थो द्यूनमपहाय दृश्यमूर्तिः।
दैत्यो ज्याद्विगुणमिदं बलीयानाचार्यः शमयति लक्षमप्यवश्यम्॥'

बुधः सप्तमं परित्यज्य अन्यकेन्द्रस्थो दोषाणां लत्तापातवेधवर्जमन्येषां शतं हन्ति। शतशब्दो बहुत्ववाचकः। शुक्रः पुनः सप्तमवर्जं केन्द्रस्थो बुधाद् द्विगुणफलः। गुरुस्तु सप्तमवर्जं बुध-शुक्राभ्यां सहस्रबलः। एतेषु केन्द्रस्थेषु विवाहः श्रेष्ठ इति तद्वृत्तौ॥ १३२

**राजद्वारे ववृधे सगुणं तेजोऽस्य पुण्ययोगेन।**
**दिनवृद्धियुतं सवितुस्तेज इव प्राप्य सदुदीचीम्॥ १३३**

**व्याख्या**—अस्य वत्सराजस्य राजद्वारे विक्रमनृपसदसि, पुण्ययोगेन पूर्वकृतसुकृतसंयोगेन, सगुणं गुणैरौदार्यधैर्यशौर्यादिभिः सहितं, तेजः प्रतापो, ववृधे वृद्धिमाप। गुणा अवर्धन्त। तेजोऽप्यवर्धत। कां प्राप्य कस्य किमिव?—उदीचीमुत्तरां प्राप्य, दिनवृद्धियुतं, सवितुः सूर्यस्य, सत्प्रधानं तेज इव धामेव। यथोदीचीं प्राप्योत्तरायणे दिनवृद्ध्या युतमन्वितं रवेस्तेजो वर्धते। उत्तरायणे हिमकरादितो दिनान्यपि वर्धन्ते रवेस्तेजोऽपि वर्धते। 'तेजस्त्विड्रेतसोर्बले, नवनीते प्रभावेऽग्नौ'—प्रभावः प्रताप इति॥ १३३



**विश्वासास्पदमभवद् मतिविभवाद् राज्यकार्यकारित्वात्।**
**सचिवस्तदेव वस्तूच्यते बुधैर्यत् स्वकार्यकरम्॥ १३४**

**व्याख्या**—सचिवो वत्सराजमन्त्री, मतिविभवाद् बुद्धिधनात्, राज्यकार्याणि करोत्येवंशीलो राज्यकार्यकारी तद्भावो राज्यकार्यकारित्वं तस्मात्। विश्वासास्पदं राज्ञो विश्रम्भाश्रयोऽभवत्। यद् यस्मात्तदेव, बुधैः पण्डितैर्वस्तूच्यते कथ्यते। यत् स्वकार्यकरं स्वकार्यकर्तृ। 'यदेव कार्यकारि तदेव परमार्थसद्' इत्युक्तेः॥ १३४

**प्रष्टव्यो भूभर्तुर्मन्त्रेषु विचित्रवस्तुविषयेषु।**
**मन्त्रीश्वरो विचारे चतुरोऽभूद् वत्सराजोऽत्र॥ १३५**

**व्याख्या**—'रहस्यालोचनं मन्त्रः' अत्र **कोडिमदेसरसि**, मन्त्रीश्वरो वत्सराजो, भूभर्तुर्विक्रमस्य, विचित्रवस्तुविषयेषु नानाविधराजकार्यगोचरेषु मन्त्रेषु, प्रष्टव्योऽनुयोक्तव्योऽभूत्। किम्भूतः? विचारे सदसद्विमर्शो विचारस्तस्मिन्, चतुरः कुशलः॥ १३५

**विधिवच्चतुर उपायान् सामादीन् यो विधाय मतिकलितः।**
**उपधाशुद्धो राज्यं शशास सुमनोमनोऽभिमतः॥ १३६**

**व्याख्या**—यो वत्सराजः, चतुरश्चतुःसंख्यान्, सामादीन् सामदानभेददण्डरूपान्, उपाया द्रव्योपार्जनहेतवस्तान्, विधिवद् यथोक्तविधिना, विधाय कृत्वा, राज्यं शशास पालयति स्म। किम्भूतः? मतिकलितः सद्धिषणः। पुनः किम्भूतः? उपधाशुद्धः—भिया धर्मार्थकामैश्च याऽमात्यानां परीक्षा सोपधेत्युच्यते तया शुद्धो निर्दोषः। शुद्धस्वर्णवत्परीक्षाप्राप्त इत्यर्थः। तथा सुमनसां प्राज्ञानां मनस्यभिमतोऽभीष्टः। साम सान्त्वनं दानं वितरणमुपजापः पुनर्भेदो दण्डः स्यात् साहसं, विधिवदिति विधिमर्हतीत्यर्हार्थे वतिः॥ १३६

**परभूमीपञ्चाननविरुदं सम्प्राप्तवान् स भाग्येन।**
**कृतसङ्घः शत्रुञ्जयशैलादिषु संव्यधाद् यात्राम्॥ १३७**

**व्याख्या**—स वत्सराजः, 'प र भू मी प ञ्चा न ने'ति विरुदं लोकप्रसिद्धं प्रवादं, भाग्येन भागधेयेन, सम्प्राप्तवान्। तथा कृतः सङ्घो लोकप्रसिद्धो येन स कृतसङ्घः, शत्रुञ्जयशैलादिषु **विमलाचल**प्रभृतितीर्थेषु, यात्रां संव्यधाच्चकार॥ १३७

श्रीदेवराजनगरे यः स्तूपे कुशलसूरिसुगुरूणाम् ।
विक्रमपुरतो यात्रां विदधे परिवारपरिकरितः ॥ १३८

**व्याख्या** – यो वत्सराजः, परिवारपरिकरितः परिच्छदसहितः सन्, श्रीदेवराजनगरे कुशलसूरिगुरूणां श्रीजिनकुशलसूरीणां स्तूपे यात्रां विदधे चकार । 'उच्छ्रितो मृदादिविकारः स्तूपः' ॥ १३८

बहुमानितोऽधिकं यो मौलत्राणाधिपेन बहुवारान् ।
सतुरगवरपश्चाङ्गप्रसाददानेन तुष्टेन ॥ १३९

**व्याख्या** – यो वत्सराजः, मौलत्राणाधिपेन मौलत्राणस्वामिना साहिना, तुष्टेन हृष्टेन सता, सतुरगवरं प्रधानाश्वसहितं यत् पश्चाङ्गप्रसाददानं लोकप्रसिद्धं तेन, बहुवारान् बह्वीर्वेला, अधिकमतिशयेन, बहुमानितः सत्कृतः ॥ १३९

आतपत्रं समासाद्य तस्मादेवावनीपतेः ।
निजेशस्य मुदा प्रादाद्, राज्यचिह्नमनुत्तरम् ॥ १४०

**व्याख्या** – तस्मादेव मौलत्राणाधिपतेरेव, आतपत्रं छत्रं, समासाद्य प्राप्य, निजेशस्य आत्मीयस्वामिनो विक्रमभूपतेः, मुदा हर्षेण, अनुत्तरमुत्कृष्टं, राज्यचिह्नं राज्यलक्ष्म, प्रादाद् ददौ ॥ १४०

दसू-तेजाभिधौ भुंणानामकश्च सुतास्त्रयः ।
देवराजस्य हंसस्तु हंसवद् वारिगोऽभवत् ॥ १४१

**व्याख्या** – देवराजस्य देवराजमन्त्रिणो, दसू-तेजाभिधौ दसू-तेजानामकौ, भुंणानामकश्च त्रयः सुताः । हंसस्तु हंसराजस्तु, हंसवद् राजहंसवद्, वारिगो वारिणि पानीये गच्छतीति वारिगोऽभवत् । राजहंसोऽपि वारिगः स्यादसावपि वारिगो जातः, लघुवयाः एव जले ममज्जेत्यर्थः ॥ १४१

नीम्बा-जोगा-रूपाः कर्णश्चेत्यादयो दसूपुत्राः ।
नीम्बासुतो विवेकी सञ्जातः खेतसीनामा ॥ १४२

**व्याख्या** – सुगमा ॥ १४२

पश्चानन-शिवराजप्रमुखा जोगासुतास्ततः पञ्च ।
यैरद्याप्यादिमजिनचैत्ये क्रियते ध्वजारोपः ॥ १४३

**व्याख्या** – स्पष्टा । नवरं यैर्जोगासुतैरद्याप्यादिमजिनचैत्ये श्रीआदीश्वरविहारे, ध्वजारोपश्चैत्यशिरसि पताकारोपः क्रियते ॥ १४३

श्रीवन्तो जयवन्तश्च मन्त्रिरूपातनूरुहौ ।
श्रीपालः कर्णसूर्जज्ञे श्रीपालस्य सुताः पुनः ॥ १४४

**व्याख्या** – मन्त्रिरूपातनूरुहौ मन्त्रिरूपापुत्रौ, श्रीवन्तो जयवन्तश्च जातौ । कर्णसूः कर्णपुत्रः श्रीपालो जज्ञे बभूव । श्रीपालस्य पुनः सुता अमी ॥ १४४

रायमल्ल-सदारङ्गादयस्तेजासुतास्त्रयः ।
सुताः श्रीवन्तसम्भूताः पद्मसी उदयादयः ॥ १४५

**व्याख्या** – आदिशब्दात् सिंहो रिणमल्लश्च, तेजासुतास्त्रयोऽमी हेमराज-धनराज-माण्डणाख्याः, अन्त्यादिशब्दान्मानाख्यो ग्राह्यः । सन्ध्यकरणं तु वक्तुर्विवक्षाया अभावाद् । विवक्षितो हि सन्धिर्भवतीत्युक्तेः ॥ १४५

वत्सपुत्राः पवित्राङ्गा वाल्हादेवीतनूरुहाः ।
चत्वारश्चतुराश्चश्चद्विचाराचारबन्धुराः ॥ १४६

**व्याख्या**–वत्सपुत्रा वत्सराजसुताः, वाल्हादेवीतनूरुहा वाल्हादेवीकुक्षिसम्भूताश्चत्वारोऽभूवन्निति गम्यते। किम्भूताः? पवित्रं पावनमङ्गं शरीरं येषां ते पवित्राङ्गाः। पुनः किम्भूताः? चतुराः कुशलाः, तथा चञ्चन् देदीप्यमानो यो विचारो विमर्शः, आचारः स्वधर्मानुष्ठानं, ताभ्यां बन्धुरा अभिरामाः॥ १४६

**तेष्वाद्यः कर्मसिंहाख्यो वरसिंहस्तथाऽपरः।**
**नरसिंहो नृणां रत्नं रत्नसिंहोऽपरः पुनः॥ १४७**

**व्याख्या**–तेषु वत्सराजपुत्रेषु मध्ये आद्यो ज्येष्ठः, **कर्मसिंहा**ख्यः सुतः, तथाऽपरो द्वितीयो **वरसिंहः**, तथाऽपरो **नरसिंहः**। किम्भूतः? नृणां मनुष्याणां मध्ये रत्नमुत्कृष्ट इत्यर्थः। अपरः पुना **रत्नसिंहः**॥ १४७

**भार्या कोतिगदेवीति कर्मसिंहस्य मन्त्रिणः।**
**राजा सूर्योऽथ संसारचन्द्रश्चेति सुतास्त्रयः॥ १४८**

**व्याख्या**–कर्मसिंहस्य मन्त्रिणः **कोतिगदेवी**तिनाम्नी भार्या रामा। तथा **राजा सूर्यः संसारचन्द्र**श्चेति त्रयः सुताः॥ १४८

**मन्त्रिराजधराख्यस्य माला-पीथाभिधौ सुतौ।**
**जयताख्योऽपरापुत्रो मान्यः संसारचन्द्रसूः॥ १४९**
**पुत्राश्च रत्नसिंहस्य भार्याद्वयसमुद्भवाः।**
**वस्तुपालो रायपालो नूराह्वो मण्डनादिमः॥ १५०**
**भीम-राज-अखा-वइरा-वाघा-पञ्चाननाभिधाः।**
**दूदा-साङ्गा-जिणूं-गउडा नरसिंहसुता नव॥ १५१** –त्रिभिर्विशेषकम्।

**व्याख्या**–सुगमा। नवरमपरस्या अन्यस्या **मन्त्रिराजधर**भार्यायाः पुत्रः॥ १४९॥ किम्भूतो **नूराह्वो** मन्त्री? **मण्डन** आदिमः प्रथमो यस्य स मण्डनादिमः॥ १५०॥ **भीमराजाद्या** नव **नरसिंह**सुता जाता इति गम्यते॥ १५१

**श्रीविक्रमधराधीशवंशेऽभूद् भाग्यशेवधिः।**
**लूणकर्णो लसद्वर्णः प्रतापप्लुष्टशात्रवः॥ १५२**

**व्याख्या**–श्री**विक्रम**धराधीशस्य वंशे **लूणकर्णो**ऽभूत्। किम्भूतः? भाग्यशेवधिर्भागधेयनिधिस्तथा लसन् देदीप्यमानो वर्णो यशो यस्येति लसद्वर्णः। तथा प्रतापेन तेजसा प्लुष्टा दग्धाः शात्रवा वैरिणो येन स प्रतापप्लुष्टशात्रवः॥ १५२

**आकर्णितः पुरा कर्णः सकर्णैरीक्षितोऽधुना।**
**दानाधिकतया लब्धावतारोऽयं स एव किम्?॥ १५३**

**व्याख्या**–पुरा पूर्वं, सकर्णैर्विद्वद्भिः सश्रोत्रैरथवा सहृदयैः, कर्णः कर्णनृप आकर्णितः श्रुतः। अधुना साम्प्रतमयं **लूणकर्णः**, स एव पूर्वमुत्पन्नः कर्ण एव, दानाधिकतया दानाधिक्येन, लब्धोऽवतारो जन्म येन स लब्धावतारः। किमिति प्रश्न ईक्षितो दृष्टः। अदोल्लूणकर्णनिभेन स एव कर्णो दानशौण्डत्वेन पुनर्लब्धावतारोऽवगम्यत इति भावः॥ १५३

**वीरसूः समभून्माता येन जातेन सूनुना।**
**खड्गधाराजले यस्यारयो मग्नाः स्वगौरवात्॥ १५४**

**व्याख्या**–येन लूणकर्णेन, जातेनोत्पन्नेन, सूनुना पुत्रेण, माताऽम्बा वीरसूः समभूज्जाता। 'वीरमाता तु वीरसूः।' वीरं सूते वीरसूः। यस्य लूणकर्णस्य, खड्गधारेव जलं खड्गधाराजलं, तस्मिन्नरयः शत्रवः, स्वगौरवादात्मीयगुरुतया, मग्ना ब्रुडिताः। अन्योऽपि यो गुरुर्भवति स एव जले मज्जति। एवं तेऽप्यसिधाराम्भसि गौरवान्ममज्जुः। यदि गौरवं तेषां नाभविष्यत्तदा तत्पादपतनमकरिष्यन्, तथाऽऽचरणाभावात् तत्खड्गधाराजले नामङ्क्ष्यन्। परं गौरवादसहिष्णवः सन्तो रणात् तत्करे मृत्युमापुरित्यर्थः॥ १५४

**जेतृसिंहो द्विषां जेता सप्रतापः प्रतापसीः ।**
**रत्नसिंहो महीरत्नं तेजसीस्तेजसा रविः ॥ १५५**

**व्याख्या**—**जेतृसिंहः**, किम्भूतः? द्विषां वैरिणां जेता पराभवकृत्, तथा सप्रतापः सतेजाः **प्रतापसीस्तथा** महीरत्नं वसुधाश्रेष्ठो **रत्नसिंहस्तथा** तेजसा प्रतापेन रविः सूर्यसमस्तेजसीः ॥ १५५

**वैरिसिंहः कृष्णनामा रूपसी-रामनामकौ ।**
**नेतसी-कर्मसी-सूर्यमल्लाख्याः कर्णसूनवः ॥ १५६**

**व्याख्या**—सुगमा । पूर्वश्लोकोक्ता एते च कर्णस्य पदैकदेशे पदसमुदायोपचारादिति **लूणकर्णस्य** सूनवः पुत्राः कर्णसूनवः ॥ १५६

**जेतृसिंहकुमारस्तु कुमारसमविक्रमः ।**
**राज्ञीलालालसत्कुक्षिसरसीहंससोदरः ॥ १५७**

**व्याख्या**—तेषां कुमाराणां मध्ये **जेतृसिंहकुमारस्तु**, कुमारः कार्त्तिकेयस्तत्समस्तत्तुल्यो विक्रमः पराक्रमो यस्य स कुमारसमविक्रम आसीदिति गम्यते । किम्भूतः? राज्ञीलालालसत्कुक्षिसरस्यां हंससोदरो राजहंससगर्भो राज्ञी**लाला**लसत्कुक्षिसरसीहंससोदरः ॥ १५७

**कर्मसिंहो महामन्त्री लूणकर्णस्य संसदि ।**
**शोभाविधायको मन्त्रवैभवान्निहताहितः ॥ १५८**

**व्याख्या**—**लूणकर्णस्य** संसदि सभायां, शोभाविधायको विभूषाकर्ता, **कर्मसिंहो** महामन्त्री बभूवेत्युपस्कारः । किम्भूतः? मन्त्रो रहस्यालोचनं स एव वैभवम् । विभोर्भावो वैभवं प्रभुता । तस्मान्निहता मारिता अहिता वैरिणो येन स निहताहितः । अन्योऽपि प्रभुतया शत्रून् हन्त्यनेन तु मन्त्रेणैव सर्वेऽप्यरयो नाशं नीता इत्यर्थः ॥ १५८

**साम्राज्यतिलकं येन लूणकर्णस्य कारितम् ।**
**सत्यसन्धेन सद्बुद्ध्या भूमिपालाच्छिशोरपि ॥ १५९**

**व्याख्या**—येन **कर्मसिंह**मन्त्रिणा, सद्बुद्ध्या प्रधानधिया, शिशोरपि लघुवयसोऽपि **लूणकर्णस्य**, साम्राज्यतिलकं साम्राज्यं समस्तसामन्तानुशासनं तस्य तिलकं विशेषकं भूमिपालाद् **विक्रमनृ**पतेः कारितम् । किम्भूतेन? सत्यसन्धेनाऽवितथप्रतिज्ञेन ॥ १५९

**विधुवारिधिभूतेन्दुप्रमिते वत्सरे सुधीः ।**
**सदुर्गं नगरं मन्त्री निर्ममे विक्रमाह्वया ॥ १६०**

**व्याख्या**—मन्त्री कर्मसिंहः, सुधीः सद्बुद्धिः विधुवारिधिभूतेन्दु(१५४१)प्रमिते वत्सरे वर्षे, विक्रमाह्वया **विक्रम**नाम्ना सदुर्गं कोट्टसहितं, नगरं **विक्रमनगर**मिति नामकं, निर्ममे निर्मितवान्निवेशयामासेत्यर्थः ॥ १६०

**नान्यत्क्षेत्रमतो जैनदर्शने गृहिणामिति ।**
**गुरोर्गिरा नमेश्चैत्यमचीकरदयं सुधीः ॥ १६१**

**व्याख्या**—अतोऽस्माच्चैत्यान्नान्यत्क्षेत्रं धनबीजवपनभूमिः, जैनदर्शने गृहिणां गृहस्थानामस्ति विद्यत इति, गुरोर्गिरा वचसा, नमेर्नेमिनाथस्य, चैत्यं विहारमयं सुधीः **कर्मसिंहो**ऽचीकरत् कारयति स्म । अचीकरदिति 'लुङ्लिः णिश्रीति चङ्णेरनिटीति णिलोपः, णौ चङ्युपधाया ह्रस्वः, ङित्वं चङीति द्वित्वं सन्वल्लघुनीति सन्वद्भावे सन्यत इतीत्वं दीर्घो लघोरिति दीर्घः' इति **प्रसादे** ॥ १६१

**भूरिवित्तव्ययं कृत्वा तत्प्रतिष्ठाऽपि कारिता ।**
**समाहूतामितश्राद्धवात्सल्यविधिनाऽमुना ॥ १६२**

**व्याख्या** – अमुना श्रीकर्मसिंहमन्त्रिणा, समाहूता बहुदेशेभ्य आकारिता अमिता बहवो ये श्राद्धास्तेषां यो वात्सल्यविधिर्वस्त्रादिभिरभ्यर्चनप्रकारस्तेन, भूरिवित्तव्ययं बहुलद्रव्योत्सर्गं कृत्वा, तस्य चैत्यस्य प्रतिष्ठा सूरिमन्त्रेण स्थापना, साऽपि कारिता। 'प्रतिष्ठा गौरवे स्थितौ, छन्दोजातौ यागसिद्धौ' इत्यनेकार्थः । 'मर्यादादेवादिस्थापनयोरपि' मङ्खः ॥ १६२

**स्थापना रसभूतेषुविधुप्रमितवत्सरे ।**
**खमुनीष्विन्दुवर्षेऽभूच्चैत्यं नमिजिनेशितुः ॥ १६३**

**व्याख्या** – नमिजिनेशितू रसभूतेषुविधुप्रमित(१५५६)वत्सरे स्थापनाऽऽरम्भोऽभूदिति गम्यते । खमुनीष्विन्दु(१५७०) वर्षे चैत्यमसिध्यदित्यध्याह्रियते ॥ १६३

**श्रीजिनहंससूरीणां शान्तिसागरसूरितः ।**
**स्थापना येन वित्तानां व्ययेन खलु कारिता ॥ १६४**

**व्याख्या** – खलु वाक्यालङ्कारे, येन श्रीकर्मसिंहेन, श्रीजिनहंससूरीणां शान्तिसागरसूरितः श्रीशान्तिसागरसूरेः सकाशाद्, वित्तानां व्ययेनोत्सर्गेण, स्थापना पदप्रतिष्ठा कारिता ॥ १६४

**याचकस्वान्तकाराभ्यो वस्तुपालादिदायकाः ।**
**मोचिता येन सद्दानविधानेन महात्मना ॥ १६५**

**व्याख्या** – येन महात्मना महामनसा कर्मसिंहेन, सद्दानविधानेन प्रधानस्वर्णादिवितरणकरणेन, याचकानामर्थिनां स्वान्तं मन एव कारा गुप्तयस्ताभ्यः वस्तुपालादयो वस्तुपालप्रमुखा ये दायका दातारस्ते मोचिताः । एतावद्दानं याचकेभ्यस्तेन दत्तं येन तच्चेतोगुप्तितस्ते वस्तुपालाद्या निःसृताः । एतस्मिन् दातरि दृष्टे सति ते तान् विसस्मरुरित्यर्थः ॥ १६५

**उत्सवावसरायाता नानामण्डलतोऽखिला ।**
**मुनीनां मण्डली येन तोषिता वेषदानतः ॥ १६६**

**व्याख्या** – येन कर्मसिंहेन, वेषदानतो वेवेष्ट्यङ्गं वेषो वस्त्रालङ्कारमाल्यप्रसाधनैरङ्गशोभा । अत्र तु लोकप्रसिद्धः साधुवस्त्रविशेषो गृह्यते, तस्य दानतो वितरणेन, नानामण्डलतो विविधदेशतः, उत्सवावसरे नन्दीमहसमये, आयाता प्राप्ता, अखिला समस्ता, मुनीनां महात्मनां, मण्डली राशिस्तोषिता प्रीणिता ॥ १६६

**लेखप्रेषणगौरवपूर्वं ये मेलिताः सधर्माणः ।**
**गौरवितास्ते गौरवभक्तिवशाद् भक्तवसनाद्यैः ॥ १६७**

**व्याख्या** – येन मन्त्रिणा, लेखोल्लेख्यः पत्रं तस्य यत्प्रेषणं मोचनं तदेव गौरवं माननं तत्पूर्वं, ये सधर्माणः साधर्मिकाः, मेलिताः सङ्घटितास्ते, भक्तवसनाद्यैरन्नवस्त्राद्यैर्वस्तुभिर्गौरवभक्तिवशाद् गुरोरियं गौरवी या भक्तिः सेवा तद्वशाद् गौरवभक्तिवशाद् गौरविता बहुमानिताः ॥ १६७

अथ श्रीजिनहंससूरिपदस्थापना-नमिचैत्यनिर्मापणसंवत्सरमेकपद्येनाह –

**स्थापनारसभूतेषुविधुप्रमितवत्सरे ।**
**खमुनीष्विन्दुवर्षेऽभूच्चैत्यं नमिजिनेशितुः ॥ १६८**

**व्याख्या** – श्रीजिनहंससूरीणां रसभूतेषुविधुप्रमित(१५५६)वत्सरे स्थापना पदप्रतिष्ठाऽभूत् । तथा खमुनीष्विन्दुवर्षे (१५७०) नमिजिनेशितुश्चैत्यमभूत् ॥ १६८

**श्रीमुक्तालयतीर्थे सतीर्थ्यसङ्घेन सङ्गतः सचिवः ।**
**यात्रां करपरिमुक्तां चकार मुक्तालयस्पृहया ॥ १६९**

**व्याख्या** – सचिवो मन्त्री **कर्मसिंहः**, तरन्त्यनेन विद्याम्भोनिधिमिति तीर्थं गुरुः, समाने तीर्थे वसति स सतीर्थ्यः, एवंविधो यः सङ्घः साध्वादिसमुदायस्तेन सङ्गतो मिलितः सन्, श्रीमुक्तालयतीर्थे **श्रीशत्रुञ्जये**, करो राजग्राह्यो भागस्तेन परिमुक्तां यात्रां चकार । कया? मुक्तानां कर्मरहितानां य आलयो निलयो मुक्तालयो मोक्षस्तत्स्पृहया वाञ्छया ॥ १६९

**एवं रैवतकेऽद्रौ तथाऽर्बुद-द्वारकादितीर्थेषु ।**
**लम्भनिकायुतयात्रा विहिता येनाधिकप्रेम्णा ॥ १७०**

**व्याख्या** – एवममुना प्रकारेण, **रैवतकेऽद्रावुज्जयन्तगिरौ**, तथाऽर्बुद-द्वारकादितीर्थेषु, येन श्रीकर्मसिंहेन, अधिकप्रेम्णा अतिशायिस्नेहेन, लम्भनिका प्रतिगृहमिष्टवस्तुदानं तया युता सहिता, यात्रा विहिता चक्रे । यात्रा चक्रे लम्भनिका च ददे इत्यर्थः ॥ १७०

**लक्षं चैत्यप्रतिष्ठायां लक्षं सूरिपदार्पणे ।**
**लक्षं यात्रासु रौप्याणां व्यययामास यः सुधीः ॥ १७१**

**व्याख्या** – यः **कर्मसिंहो** मन्त्री सद्बुद्धिः चैत्यप्रतिष्ठायां रौप्याणां राजतानां लक्षं, तथा सूरिपदार्पणे **जिनहंससूरी**णामाचार्यपदसमर्पणे रौप्याणां लक्षं, तथा यात्रासु **शत्रुञ्जया**दितीर्थयात्रासु रौप्याणां लक्षं व्यययामास । वित्तसमुत्सर्गं त्यागमकार्षीद् । व्ययण् वित्तसमुत्सर्गे ॥ १७१

**सत्रशाला कृता नेत्रवार्धिभूतेन्दुवत्सरे ।**
**चतुर्दशसमाः कल्पपुस्तकं येन चाऽऽददे ॥ १७२**

**व्याख्या** – येन श्रीकर्मसिंहेन मन्त्रिणा, नेत्रवार्धिभूतेन्दु(१५४२)वत्सरे सत्रशाला कृता । सत्रं सदादानम् । च पुनर्येन चतुर्दशसमाश्चतुर्दशवर्षाणि यावत् कल्पपुस्तकमाददे कल्पपुस्तकं वाचयामासेत्यर्थः ॥ १७२



**भूजानिषु प्रभूतेषु विवाहायाऽऽगतेष्वपि ।**
**चित्रकूटेऽकरोच्छोभां विवाहे यो निजेशितुः ॥ १७३**

**व्याख्या** – यः कर्मसिंहो मन्त्री, **चित्रकूटे** विवाहाय पाणिपीडनाय, प्रभूतेषु बहुषु भूजानिषु राजस्वागतेष्वपि प्राप्तेष्वपि, निजेशितुः स्वस्वामिनो **लूणकर्णस्य**, विवाहे शोभां लक्ष्मीमकरोच्चकार । भूरेव जाया यस्य भूजानिः । 'जायाया निङिति' जायान्तस्य बहुव्रीहेर्निङादेशः ॥ १७३

**अन्यदा लूणकर्णेन समकं नन्दगोकुले ।**
**जगाम वैरिसङ्घातघातनाय स मन्त्रवित् ॥ १७४**

**व्याख्या** – अन्यदाऽन्यस्मिन् काले, स मन्त्रविद् रहस्यालोचनं मन्त्रस्तं वेत्तीति मन्त्रविन्मन्त्री **कर्मसिंहः, नन्दगोकुले 'नारनउल'** इति नाम्नारूढे, वैरिणां यः सङ्घातः समूहस्तस्य घातनाय विनाशाय, लूणकर्णेन समकं सह जगाम ॥ १७४

**सङ्ग्रामे वैरिभिः सार्धं सहसा समुपस्थिते ।**
**सुभटाः स्वामिधर्मत्वादन्योऽन्यं प्राहरंस्तराम् ॥ १७५**

**व्याख्या** – वैरिभिः शत्रुभिः सार्धं समं, सहसाऽनालोच्याऽवितर्कितमेव, सङ्ग्रामे युद्धे समुपस्थिते प्राप्ते सति, सुभटा योधाः, स्वामिधर्मत्वात्स्वामिनः प्रभोर्धर्मो येषां ते स्वामिधर्माणः । 'धर्मादनिच् केवलाद्' इति केवलात्पदाद् यो धर्मशब्दः केवलस्तदन्ताद् बहुव्रीहेरनिच् स्यात् । तद्भावः स्वामिधर्मत्वं तस्मात् । यथैव स्वामी कुरुते तथैव सेवका अपि कुर्वन्तीति भावः । अन्योऽन्यं परस्परं प्राहरंस्तरामतिशयेन प्रहारांश्चक्रुः । प्राहरंस्तरामिति – 'तरतमपौ घः' इति घः । 'किमेत्तिङव्ययघादाम् च द्रव्यप्रकर्षे' इति । 'किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तामुः स्यात्' । सहसेति 'सहसाऽऽकस्मिकाविमर्शयोः' ॥ १७५

मन्त्री कृत्वा जिनार्चार्चां स्मृत्वा पञ्चनमस्कृतिम् ।
साकारानशनं धृत्वा सङ्ग्रामं समुपेयिवान् ॥ १७६

व्याख्या – तस्मिन्नवसरे मन्त्री श्रीकर्मसिंहः, जिनस्य तीर्थकृतोऽर्चायाः प्रतिमाया अर्चां पूजां कृत्वा, तथा पञ्चनमस्कृतिं पञ्चनमस्कारान् स्मृत्वा चिन्तयित्वा, तथा आकारैः – 'अन्नत्थणा भोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं' इत्येवंरूपैश्चतुर्भिः सहितं साकारं यदनशनं प्रायस्तद् धृत्वा, सङ्ग्रामं समुपेयिवान् प्राप्तः । 'अर्चा पूजा प्रतिमाऽपि च' इत्यनेकार्थः ॥ १७६

अर्हत्सिद्धानगाराहर्द्धर्मरूपाणि सादरम् ।
चत्वारि शरणान्येष समादाय दयान्वितः ॥ १७७
लूणकर्णमहीजानेः पुरस्तादस्तसाध्वसः ।
सुरालयमलञ्चक्रे स्वामिधर्मधुरन्धरः ॥ १७८ – युग्मम् ।

व्याख्या – एष कर्मसिंहो मन्त्री, सादरं साग्रहम्, अर्हत्सिद्धानगारार्हद्धर्मरूपाणि चत्वारि शरणानि समादाय गृहीत्वा, लूणकर्णमहीजानेः पुरस्तादग्रे, सुरालयं स्वर्गमलञ्चक्रेऽलङ्कृतवान् । किम्भूतः? दयया कृपयाऽन्वितः सहितो दयान्वितः । पुनः किम्भूतः? – अस्तं ध्वस्तं साध्वसं दरो येन सोऽस्तसाध्वसः । पुनः किम्भूतः? स्वामिधर्मधुरन्धरः स्वामिधर्मधौरेयः स्वामिधर्मनिर्वाहक इत्यर्थः । धुरां धारयति धुरन्धरः ॥ १७७ – १७८

तथा प्रतापसिंहस्य पुरतो रणकर्मणा ।
राजा-मेघादिमन्त्रीशाः परलोकमिहाऽऽश्रयन् ॥ १७९

व्याख्या – तथेति समुच्चये । इह सङ्ग्रामे, राजा-मेघादिमन्त्रीशाः, प्रतापसिंहस्य कुमारस्य, पुरतोऽग्रे, रणकर्मणा सङ्ग्रामकृत्येन, परलोकं परभवमाश्रयन्नाशिश्रियुः ॥ १७९

स्वीयां राज्यश्रियं कर्णो जेतृसिंहे नृपोऽदधात् ।
बृहद्भानाविव स्वीयं भानुर्भानुं निशामुखे ॥ १८०

व्याख्या – कर्णः पदैकदेशे पदसमुदायोपचाराल्लूणकर्णः, स्वीयामात्मीयां राज्यश्रियं राज्यलक्ष्मीं, जेतृसिंहे नृपेऽदधाद् धारयति स्म । कः कस्मिन् कमिव? भानुः सूर्यो निशामुखे सन्ध्यायां बृहद्भानौ वह्नौ स्वीयं भानुं ज्योतिरिव । यथा भानुः सन्ध्यायां स्वीयं तेजो वह्नौ निधाय गच्छति तथाऽयमपि स्वसाम्राज्यं जेतृसिंहे न्यधादिति । 'भानुरंशौ रवौ दिने' इत्यनेकार्थः ॥ १८०

जेतृसिंहे स्वसाम्राज्यं शासति श्वापदा इव ।
राजानोऽन्ये भयान्नेशुः कान्दिशीका दिशोदिशम् ॥ १८१

व्याख्या – जेतृसिंहे राज्ञि, स्वसाम्राज्यं स्वप्रभुतां, शासति पालयति सति, अन्ये राजानः, श्वापदा इव व्याला इव, कान्दिशीका भयेन पलायिता दिशोदिशमेकस्या दिशोऽन्यां दिशं भयाद् भीतेर्नेशुः पलायाञ्चक्रिरे । कां दिशं व्रजामीत्याकुलः कान्दिशीकः पृषोदरादित्वात्साधुः ॥ १८१

तत्सुतरत्नं लोके प्रथमः कल्याणमल्लराजोऽभूत् ।
श्रीमालदेव-भीमौ ठाकुरसी-काह्ननामानौ ॥ १८२

व्याख्या – तस्य जेतृसिंहस्य, सुतरत्नं पुत्ररत्नं, लोके विश्वे, प्रथमो मुख्यः, कल्याणमल्लराजोऽभूत् । तथा श्रीमालदेव-भीमौ ठाकुरसी-काह्ननामानौ ॥ १८२

कसमीरदेविजाताः पञ्चामी पाण्डवा इवापूर्वाः ।
व्यसनविमुक्ता दुर्योधनप्रियाः सन्त्यमी यस्मात् ॥ १८३

**व्याख्या**—कसमीरदेविजाताः कसमीरदेविपुत्राः, अमी **कल्याणमल्लादयः**, अपूर्वा नवाः पञ्च पाण्डवा इव युधिष्ठिरादय इव । अपूर्वत्वमेवैषामाह—यस्माद्धेतोरमी कल्याणमल्लाद्याः पञ्चापि पाण्डवा व्यसनं विपत्तिस्तेन विमुक्ता रहिताः, तथा दुष्टं यद्योधनं युद्धकरणं तत्प्रियमिष्टं येषां ते दुर्योधनप्रियाः, सन्ति विद्यन्ते । पूर्वपाण्डवास्त्वेवंविधा नाभूवन् । ते च व्यसनानि दुरोदरादीनि मृगयादयः सप्त तद्विमुक्ता न भवन्ति । तथा दुर्योधनः कौरवः स प्रियो येषामेवंविधो न स्युः ।

'व्यसनं निष्फलोद्यमे, दैवानिष्टफले सक्तौ, स्त्रीपानमृगयादिषु, पापे विपत्तावशुभे ।' **इत्यनेकार्थः** ।

'द्यूतं च मांसं च सुरा च वेश्या, पापर्द्धि चौर्यं परदारसेवा ।
एतानि सप्त व्यसनानि लोके, पापाधिके पुंसि सदा भवन्ति ॥ १'

दुर्योधन इति 'शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यो वेल्लेके, युधेर्ण्यन्ताद् दुर्योधनः, णेर्लोपे दुर्योध इति ॥ १८३

**पत्न्यन्तरजा अन्ये सुता बभुः पूर्ण-मल्लसिंहाख्यौ ।**
**पुनरचल-मान-सुरजन-कर्म-श्रीरङ्गजीप्रमुखाः ॥ १८४**

**व्याख्या**—अन्येऽपरे सुताः । पत्न्यन्तरजा अन्यभार्या जाता बभुः शुशुभिरे । तानेव नामतः आह—**पूर्ण-मल्लसिंहाख्यौ**, पुनर्भूयः, **अचल-मान-सुरजन**-[कर्म ? ]**श्रीरङ्गजी**प्रभृतयः ॥ १८४

अथ श्रीवरसिंहमन्त्रिसन्ततिवक्तव्यतामाह—

**वरसिंहो महामात्यो वीझादेवीसतीवरः ।**
**धर्मकर्मसु निष्णातः पुष्णाति स्म सुहृज्जनम् ॥ १८५**

**व्याख्या**—तत्पदे **वरसिंहो** महामात्यो बभूवेत्यध्याहियते । **वीझादेवी**ति नाम्नी या सती तस्या वरो भर्ता, यो धर्मकर्मसु निष्णातो निपुणः, सुहृज्जनं मित्रलोकं, पुष्णाति स्म अभीष्टदानैः पुपोष ॥ १८५

**चम्पापुरे मदप्फरसाहेः शत्रुञ्जयादियात्रायाः ।**
**फुरमानमाप्तवान् यो षण्मासीं यावदुपजीव्य ॥ १८६**

**व्याख्या**—यः श्रीव**रसिंहो** मन्त्री, **चम्पापुरे मदप्फरसाहेः** सकाशाच्छत्रुञ्जयादियात्रायाः फुरमानं छप्पामाप्तवान् प्राप । किं कृत्वा ? षण्मासीं षट् मासान् यावदुपजीव्य तत्सेवामनुभूय ।

'आस्वादयत्यनुभवत्युपजीवति चोपयुङ्क्ते च । उपभुङ्क्ते निर्विशतीत्युपयोगे योग्यतां याताः' ॥ इति **क्रियाकलापे** ॥ १८६

**राज्ञा दुर्गस्य दुर्गस्य तालिका करसात्कृता ।**
**यस्य सर्वोऽपि लोकानां न्यायश्च विषयीकृतः ॥ १८७**

**व्याख्या**—राज्ञा **जेतृसिंहेन**, यस्य **श्रीवरसिंहस्य**, दुर्गस्य दुर्गमस्य, दुर्गस्य कोट्टस्य, तालिका तालकोद्घाटनयन्त्रं, करसाद्धस्तायत्ता कृता । च पुनर्यस्य सर्वोऽपि लोकानां जानपदजनानां, न्यायो नीतिर्विषयीकृतो गोचरीकृतः ॥ १८७

**तीर्थेषु पुण्यहेतोर्विमलार्बुदरैवताद्रिरूपेषु ।**
**मुक्तीकृततीर्थपथं यात्रां यः सङ्घयुग् विदधे ॥ १८८**

**व्याख्या**—यः श्रीव**रसिंहो** मन्त्री, पुण्यहेतोः पुण्यनिमित्तं, **विमलार्बुदरैवताद्रिरूपेषु** शत्रुञ्जयार्बुदोज्जयन्त**गिरि**रूपेषु, तीर्थेषु पुण्यक्षेत्रेषु, मुक्तीकृतः करमोक्षणान्मुत्कलीकृतस्तीर्थपथः श्रीतीर्थराजारोहः, यत्र यात्राविधाने तन्मुक्तीकृततीर्थपथमेवं यथा स्यात्तथा, सङ्घं युनक्तीति सङ्घयुक् सङ्घसहितो यात्रां विदधे चकार ॥ १८८

**मार्गे चकार चतुरो लम्भनिकां लाभकारणं मन्त्री ।**
**सम्मानितो मदप्फरनाम्ना श्रीसाहिना बहुशः ॥ १८९**

**व्याख्या**—चतुरः कुशलो मन्त्री **वरसिंहः**, मार्गे तीर्थयात्रापथे, लम्भनिकां 'लाहणीति' रूढां चकार चक्रे । किम्भूतां ? लाभस्य पुण्यप्राप्तेः कारणं हेतुः । यो मन्त्री **मदप्फर**नाम्ना श्रीसाहिना, बहुशो बहुवारान्, सम्मानितः पञ्चाङ्गप्रासादादिदानेन सत्कृतः । बहुश इति 'संख्यैकवचनाच्च वीप्सायाम्' इति शस् ॥ १८९

दीनानाथजनानामुपकारपरायणैकधिषणाभृत् ।
तेने च सत्रशालां वर्षे नेत्रवसुपञ्चदशे ॥ १९०

**व्याख्या**–च पुनः, यः श्रीवरसिंहः, दीनाश्च दैन्यभाजः कृपणा इत्यर्थः, अनाथाश्च अस्वामिकाः, जनाश्च सामान्यलोकाः, तेषामुपकार उपकरणे परायणा प्रवणैकाऽद्वितीया या धिषणा बुद्धिस्तां बिभर्ति धारयति यः, स उपकारपरायणैकधिषणाभृत् सन्, नेत्र-वसु-पञ्चदशे (१५८२) वर्षे सत्रशालां तेने विस्तारयामास ॥ १९०

गुरुभिः श्रीजिनकुशलैर्यात्रां श्रीदेवराजवरतीर्थे ।
सततं कर्तुमना अपि कर्तुमशक्तो यदा दृष्टः ॥ १९१
सम्मुखमागम्य तदा स्वप्नद्वारा स्वरूपमाख्याय ।
सारगडालास्थाने यात्रा सफलीकृता यस्य ॥ १९२ –युग्मम् ।

**व्याख्या**–श्रीजिनकुशलैर्गुरुभिः, श्रीदेवराजवरतीर्थे, यात्रां सततं नित्यम्, कर्तुमना अपि कर्तुकामोऽपि, श्रीवरसिंहो मन्त्री, यदा यस्मिन् काले, तद्देशीयराजविरोधेन कर्तुमशक्तोऽक्षमो दृष्टोऽवलोकितः, तदा तस्मिन् काले, सम्मुखं देवराजपुरादभिमुखमागम्य, स्वप्नद्वारा स्वप्नः सुप्तज्ञानं तद्द्वारा, स्वरूपमहमभिमुखमागतोऽस्मीति लक्षणमाख्याय कथयित्वा, सारगडालास्थाने, यस्य मन्त्रिणः श्रीवरसिंहस्य, यात्रा सफलीकृता, सफला विदधे ॥ १९१–१९२

अधुनाऽपि तकत् स्थानं तीर्थतया विश्रुतं समस्तीह ।
सेवकजनकृतवाञ्छाप्रपूरणात् सर्वगच्छेषु ॥ १९३

**व्याख्या**–इह भूमौ, तकदिति तत्, 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच्, स्थानमधुनाऽपि साम्प्रतमपि, तीर्थतया विश्रुतं विख्यातं समस्ति । कस्मात्? सर्वगच्छेषु सेवकजनस्य भक्तलोकस्य कृता या वाञ्छा आशा तस्याः प्रपूरणात् सम्पादनात् ॥ १९३



वरसिंहमन्त्रिपुत्राः षडपि षडङ्गीविचारनिष्णाताः ।
अषडक्षीणालोचा लोचनविक्षेपभावज्ञाः ॥ १९४

**व्याख्या**–वरसिंहस्य मन्त्रिणः पुत्राः षडपि, षडङ्गीविचारे षडङ्गीविमर्शे, निष्णाता निपुणाः । तत्र षडङ्गान्यमूनि 'शिक्षाकल्पव्याकरणच्छन्दोज्योतिर्निरुक्तयः' इति । बभूवुरिति गम्यते । किम्भूताः? अषडक्षीण आलोचो रहस्यालोचनं येषां तेऽषडक्षीणालोचाः । 'तन्मन्त्राद्यषडक्षीणं यत्तृतीयाद्यगोचरः ।' पुनः किम्भूताः? लोचनविक्षेपेण नेत्रविकारेण, भावं पराभिप्रायम्, जानन्तीति लोचनविक्षेपभावज्ञाः ॥ १९४ तानेव नामत आह–

सन्मेघराज-नगराजनामकावमरसिंह-भोजाख्यौ ।
हरराजो डुङ्गरसीनामाऽथ सुताऽभवद् वीरा ॥ १९५

**व्याख्या**–एते सन्मेघराजाद्याः षट्, अथ षट्पुत्र्यनन्तरं वीरानाम्नी सुता पुत्र्यभवत् ॥ १९५

तानेव पुत्रान् विशेषयन्नाह–

सन्मन्त्रविधातारो दातारः सकलभावमातारः ।
त्रातारः शरणागतलोकानां सत्यवक्तारः ॥ १९६

**व्याख्या**–किम्भूतास्ते? सन्मंत्रस्य प्रधानालोचस्य विधातारः कर्तारः, तथा दातार उदाराः, तथा सकलभावानां समस्ताभिप्रायाणां मातारः प्रमातारः । 'माङ्क् मानशब्दयोः ।' तथा शरणाय शरणार्थमागताः समेता ये लोकास्तेषां त्रातारो रक्षकाः, तथा सत्यवक्तारः सत्यवादिनः ॥ १९६

**पद्मसिंहो वैरिसिंहो मेघराजसुतावुभौ ।**
**श्रीचन्द्रः पद्मसीसूनुर्वैरिसिंहसुताविमौ ॥ १९७**

**व्याख्या–पद्मसिंहो वैरिसिंह** इमावुभौ द्वौ **मेघराजसुतौ** मेघराजपुत्रावास्तामध्याह्रियते । तथा **पद्मसीसूनुः** पद्मसीपुत्रः **श्रीचन्द्रः** कुशाग्रीयमतिः, तथा **वैरिसिंहसुताविमौ** वक्ष्यमाणौ ॥ १९७ तावेवाह–

**सदारङ्गोऽथ कर्पूरो जोधाख्यो हरिराजसूः ।**
**सुतो भैरवदासोऽस्य रामो भोजस्य नन्दनः ॥ १९८**

**व्याख्या–सदारङ्गः**, अथानन्तरं **कर्पूर**स्तथा **हरिराजसू**र्हरिराजपुत्रो **जोधाख्यो** जोधाभिधः, अस्य जोधस्य पुत्रो **भैरवदासः**, तथा **भोजस्य** भोजराजमन्त्रिणो, नन्दनः पुत्रो **रामः** ॥ १९८

**सुता अमरसिंहस्य सीपा-सीहाभिधौ तथा ।**
**सीमाह्वः सिंहराजोऽथ सिवराजोऽपि पञ्चमः ॥ १९९**
**मन्त्रिसीपाङ्गजा एते अर्जुनः खीमसीस्तथा ।**
**पुनः सुरजनाभिख्यस्तुर्यो झाञ्झणसीर्मतः ॥ २००**
**आद्यो जेसिंहदेसूनुर्जीवराजो द्वितीयकः ।**
**जगहत्थस्तृतीयोऽस्ति मन्त्रिसीहासुता अमी ॥ २०१**
**राघवदे-हमीराद्याः सीमामात्यसुतस्ततः ।**
**सद्राजमल्ल-रासाद्याः सिंहराजसुतास्त्रयः ॥ २०२**
**घडसी-जगमालाद्याः सिवराजसुताः पुनः ।**
**मन्त्रिडूङ्गरसीपुत्रो मन्त्री नरवदाभिधः ॥ २०३**
**सुता नरवदस्यासन्नचलः प्रथमस्ततः ।**
**भारमल्लो लाखणसीमुख्याः षडपि धार्मिकाः ॥ २०४**

स्पष्टार्थाः । नवरं षडपि धार्मिकाः–धर्मं चरन्ति धार्मिकाः। 'धर्मं चरति' अस्माच्चरत्यर्थे ठगिति ठक् ॥१९९–२०४

**अथ प्रतापशोभाभृज्जेतृसिंहेशसम्मतः ।**
**नगराजोऽभवन्मन्त्री मन्त्रकर्मसु कर्मठः ॥ २०५**

**व्याख्या–**अथ **वरसिंह**मन्त्र्यनन्तरं **नगराजो** मन्त्र्यभवत् । किम्भूतः ? प्रतापस्तेजः **शोभा** लक्ष्मीस्ते बिभर्ति धारयतीति प्रतापशोभाभृत् । तथा **जेतृसिंहेशस्य** जेतृसिंहप्रभोः सम्मतोऽभिमतो **जेतृसिंहेशसम्मतः** । तथा **मन्त्रकर्मसु**आलोच-कार्येषु कर्मठः कर्मशूरोऽलब्धश्रम इत्यर्थः ॥ २०५

**शत्रुञ्जयोज्जयन्तादितीर्थेषु सुकृतार्थिना ।**
**कृता यात्रा कृतज्ञेन येन लम्भनिकायुता ॥ २०६**

**व्याख्या–**येन श्री**नगराजेन**, सुकृतं पुण्यमर्थयते याचत इत्येवंशीलः सुकृतार्थी, तेन **सुकृतार्थिना**, पुण्यार्थमित्यर्थः । **शत्रुञ्जयोज्जयन्तादितीर्थेषु** लम्भनिकायुता लम्भनिकायुक्ता यात्रा कृता । किम्भूतेन ? कृतमुपकारं जानातीति कृतज्ञस्तेन ॥ २०६

**मालदेवेऽन्यदा सेनासनाथे जङ्गलावनिम् ।**
**जिघृक्षति महामात्यं जेतृसिंहोऽवदत्तराम् ॥ २०७**

**व्याख्या–**अन्यदाऽन्यस्मिन् काले, सेनासनाथे सैन्यसहिते **मालदेवे** नृपे, जङ्गलावनिं **जङ्गलदेशभूमिम्**, जिघृक्षति ग्रहीतुमिच्छति सति, **जेतृसिंहो** नृपो महामात्यं महाधीसखं श्री**नगराज**मवदत्तरामतिशयेनाब्रवीत् ॥ २०७

मन्त्रिराज! बली राजा मालदेवोऽस्मदादिभिः।
असाध्यस्तेन नानेन सार्धं स्पर्धा गुणावहा ॥ २०८

**व्याख्या**—हे मन्त्रिराज! श्रीनगराज! मालदेवो राजा बली बलवान् सैन्यवान् सामर्थ्यवांश्च। अस्मदादिभिरस्मत्प्रमुखैरसाध्यः साधयितुमशक्योऽजय्य इत्यर्थः। तेन कारणेनानेन मालदेवेन सार्धं समं स्पर्धा संह(घ)र्षो गुणावहा गुणकारिणी न। अनेन सह योद्धुमलम्॥ २०८

श्रूयतेऽत्र समागन्ता यावन्नायाति स स्वयम्।
तावत् पुरैव मन्त्रोऽत्र कार्यः किं पुनरागमे ॥ २०९

**व्याख्या**—अत्र जङ्गलावन्याम्, स मालदेवः समागन्ता आगन्तुकः श्रूयते, यावत्तावच्छब्दौ कालावधारणार्थौ, यावत् स मालदेवः स्वयमात्मना ना आयाति, तावत् पुरैव पूर्वमेव, अत्र समये मन्त्र आलोचः कार्यः कर्तव्यः। तस्मिन् पुनरागते समेते किम्? 'किं प्रश्ने कुत्सनेऽपि च'। समेते तस्मिन् न किमपि विधातुमलम्भूष्णवो भविष्याम इत्यर्थः॥ २०९

गूढमन्त्रस्ततो मन्त्री राज्ञा मन्त्रितवानिति।
सेरसाहिरिहाराध्यो विना तं न स्वकामितम् ॥ २१०

**व्याख्या**—ततो जेतृसिंहकथनानन्तरम्, गूढो गुप्तः परैरपरिच्छेद्यो मन्त्रोऽस्येति गूढमन्त्रो मन्त्री श्रीनगराजः, राज्ञा जेतृसिंहेन सममिति मन्त्रितवान् आलोचितवान्। इतीति किम्? हे स्वामिन्! इह समये सेरसाहिः सेरपातिसाहिराराध्यः प्रसादनीयः। यतस्तं सेरसाहिं विना न स्वकामितं स्वेप्सितं वैरिहननादिलक्षणम्॥ २१०

समर्थानां यतश्चिन्ता समर्थैरपनीयते।
महाद्रुणेव कण्डूया गजगण्डस्य नश्यति ॥ २११

**व्याख्या**—यतो हेतोः, समर्थानां प्रभविष्णूनाम्, चिन्ता मनसि दुरध्यवसायः, समर्थैः प्रभविष्णुभिरपनीयते दूरीक्रियते। केन कस्य केव? महाद्रुणेव महावृक्षेणेव, गजगण्डस्य करिकपोलस्य, कण्डूया खर्जूर्नश्यति नान्येनैरण्डादिना, तथा महतां चिन्ता महद्भिरेवापनेया नान्यैरिति भावः॥ २११

साधु साधु महामन्त्रिन्! मन्त्रितं स्वार्थसिद्धये।
गुणायाधिगुणे सेवा मोघाऽपि सफला किमु ॥ २१२

**व्याख्या**—हे महामन्त्रिन्! श्रीनगराज! स्वार्थसिद्धये—स्वः स्वकीयो यो अर्थः शत्रुप्रतिघातादिस्तस्य या सिद्धिर्निष्पत्तिस्तस्यै स्वार्थसिद्धये। साधु साधु, सम्भ्रमे द्वित्वम्, मन्त्रितमालोचितम्। यतः—अधिगुणे गुणाधिके पुंसि सेवा परिचर्या, मोघाऽपि अलब्धकामाऽपि निष्फलाऽपि, गुणाय गुणकारिणी, सफला फलवती, किमु?, किमु इति वितर्केऽव्ययम्। फलवत्यास्तस्याः सेवायाः किमुच्यत इत्यर्थः। कोऽर्थः? गुणाधिकः सेवितो यदि स्वेप्सितं न पूरयति तथाऽपि परकृतोपद्रवनिवारणरूपं गुणं जनयेदेव। अधमात् पूर्णकामोऽपि सेवको निन्द्यत एव। तेन तत्सेवैव कर्तुमुचितेति॥ २१२

तेन साहिसमीपे त्वं याहि सोत्साहमानसः।
मानसेन विना येन न हंसानां मनोरतिः ॥ २१३

**व्याख्या**—तेन कारणेन, हे मन्त्रिन्! उत्साहः प्रगल्भता, सह उत्साहेन वर्तत इति सोत्साहम्, तथाविधं मानसं चित्तं यस्यासौ सोत्साहमानस एवंविधः सन्, साहिसमीपे सेरसाहिसविधे, त्वं याहि गच्छ। सोत्साहमानस इति विशेषणे अयं भावः—सदा मानसोत्साह एव प्राक् शकुनम्। 'इङ्गिरा मन उत्साहः' इति वाक्यात्। येन कारणेन मानसेन सरोविशेषेण विना, हंसानां राजहंसानां मनोरतिर्मनोरागो न। यथा किल हंसा मानस एव रागं बध्नन्ति तथा त्वया सेरसाहिसेवायामेव स्वचेतो वर्तनीयम्। 'मानसं स्वान्तसरसोः' इत्यनेकार्थः॥ २१३

**तथेत्युक्त्वा ततो मन्त्री नगराजो बलाधिकः ।**
**नगराज इवाऽक्षोभ्यो रणे वैरिसमीरणैः ॥ २१४**
**राजन्यसैन्यमादाय दायोपायविशारदः ।**
**शकुनानुमितस्वार्थसिद्धिः साहिमुपेयिवान् ॥ २१५ –युग्मम् ।**

**व्याख्या**–तथेति निश्चये पृष्टप्रतिवाक्ये वा । 'तथा स्यान्निश्चये पृष्टप्रतिवाक्ये समुच्चये' । उक्त्वा कथयित्वा, यथा भवद्भिरुक्तं तथैवेति निगद्य, ततोऽनन्तरं मन्त्री **नगराजो** राजन्याः क्षत्रियास्तेषां सैन्यं सेनामादाय गृहीत्वा, साहिं सेरसाहिमुपेयिवान् प्राप्तः । किम्भूतः ? बलाधिकः–बलं पराक्रमस्तेन अधिकोऽतिशायी बलाधिकः, तथा वैरिसमीरणैर्वैरिणः शत्रवस्त एव समीरणा वायवस्तैः, रणे सङ्ग्रामे, नगराज इव मेरुरिव, अक्षोभ्यः क्षोभयितुमशक्यः अपरिभवनीयः । यथा मेरुर्वायुभिर्न क्षोभ्यते तथाऽयमपि शत्रुभिरक्षोभ्य इत्यर्थः । तथा दायो दानमुपायाः सामाद्याश्चत्वारस्तत्र विशारदः कोविदो दायोपायविशारदः ।

'दायो दाने यौतकादिधने सोल्लुण्ठभाषणे । विभक्तव्यपितृद्रव्ये'–इत्यनेकार्थः ।

तथा शकुनैर्दैवशंसिनिमित्तैरनुमिता अनुमानप्रमाणविषयीकृता स्वार्थसिद्धिः स्वकामितनिष्पत्तिर्येन स शकुनानुमितस्वार्थसिद्धिः ॥ २१४–२१५

**गजाश्वकरभव्रातमुपदीकृत्य सेवया ।**
**शूरत्राणं सुरत्राणं प्रीणयामास मन्त्रवित् ॥ २१६**

**व्याख्या**–मन्त्रवित् श्रीनगराजः, गजा हस्तिनः, अश्वा वाजिनः, करभास्त्रिहायणा उष्ट्रास्तेषां व्रातः समूहस्तमुपदीकृत्य ढौकनीकृत्य, सेवया परिचर्यया, सुरत्राणं **सेरसाहिं** प्रीणयामास तोषयामास । किम्भूतम् ? शूरान् वीरांस्त्रायते रक्षतीति शूरत्राणस्तम् ॥ २१६

**शात्रवागममाशङ्क्य सकल्याणस्ततोऽखिलः ।**
**राजलोकोऽमुना मुक्तः श्रीसारस्वतपत्तने ॥ २१७**

**व्याख्या**–ततोऽनन्तरं शात्रवाणां वैरिणामागममागमनमाशङ्क्य, मा तेऽत्र अकस्मादागच्छेयुरिति पर्यालोच्य, अखिलः समस्तः, सकल्याणः **कल्याणमल्ल**कुमारसहितो राजलोकः, अमुना **जेतृसिंहेन** श्री**सरस्वतीपत्तने** मुक्तः प्रेषितः ॥ २१७

**मालदेवे समायाते समादातुं मरुस्थलीम् ।**
**जेतृसिंहोऽभ्यमित्रीणः समभूद् विमुखो रुषा ॥ २१८**

**व्याख्या**–**मरुस्थलीं** मरुभूमिम्, समादातुं ग्रहीतुम्, **मालदेवे** राज्ञि समायाते सति, **जेतृसिंहो**ऽभ्यमित्रीणोऽभ्यमित्रीयः समभूज्जातः । **सोहवाग्रामं** यावदभिमुखं जगामेति भावः । किम्भूतः ? रुषा रोषेण, विमुखो विरुद्ध मुखः अरुणवदन इत्यर्थः । आभिमुख्येनामित्रानलङ्गाम्यभ्यमित्रीणः ॥ २१८

**आयोधने समारब्धे नृपाग्रे भीममन्त्रवित् ।**
**युध्यमानो भटैः सार्धं शुद्धध्यानो दिवं ययौ ॥ २१९**

**व्याख्या**–आयोधने **मालदेवेन** समं रणे समारब्धे प्रारब्धे सति, नृपाग्रे **जेतृसिंह**नृपस्य पुरतो भीममन्त्रविद् **भीमराज**मन्त्री, भटैर्वैरिसुभटैः सार्धं युध्यमानो युद्धं कुर्वाणः, शुद्धं विमलं ध्यानं यस्यासौ शुद्धध्यानः, दिवं स्वर्गं ययौ । लोकोक्त्या ममारेत्यर्थः । रणेऽपि शुद्धध्यानाद् वरुणनागनत्तुकस्येव स्वःप्राप्तेः कथनात् स्वर्गगमनमपि तस्य सम्भाव्यते ॥ २१९

**मालदेवोऽपि सङ्ग्रामे जेतृसिंहे मृते सति ।**
**जङ्गलं देशमादाय दरीमिव पुरीं गतः ॥ २२०**

**व्याख्या**—सङ्ग्रामे युद्धे **जेतृसिंहे** मृते सति, **मालदेवोऽपि** जङ्गलं देशमादाय स्वीकृत्य, दरीमिव कन्दरामिव, उभयतः शैलशालित्वात् कन्दरोपमानं पुर्याः पुरीं **विक्रमनगरीं** गतः प्राप्तः । छायार्थस्तु जेतृसिंहे जिष्णुहर्यक्षे मृते सति, यः कोऽपि सिंहाश्रितदरीं विशत्येवेति ॥ २२०

अथ साहिसविधे गतेन तद्भीमराजकुमारेण मन्त्रिणा यदकारि तदाह—

**साग्रहं साहिमभ्यर्थ्य सममेवास्य सेनया ।**
**वैरिमण्डलमुद्वास्य रणे हत्वा च तद्भटान् ॥ २२१**
**स्वदेशमात्मसात्कृत्वा शोभामासाद्य वैरिषु ।**
**वैरिनिर्यातनं सृष्ट्वा व्यावृत्तोऽयं स्वसाहिना ॥ २२२** —युग्मम् ।

**व्याख्या**—अयं श्री**नगराजो** मन्त्री, वैरनिर्यातनं वैरशुद्धिम्, सृष्ट्वा कृत्वा, स्वसाहिना स्वीय**सेरसाहिना** समं व्यावृत्तो व्याजुघोट । 'सृजति करोति प्रणयती'त्यादय एकार्थाः । किं कृत्वा ? साग्रहं सानुग्रहं साहिमभ्यर्थ्य याचित्वा, अस्य साहेः सेनया सैन्येन सममेव सहैव भूत्वा, वैरिमण्डलं वैरिदेशमुद्वास्य विशंस्थुलं विधाय, च पुना रणे सङ्ग्रामे तद्भटान् **मालदेवसु-भटान्**, हत्वा मारयित्वा, तथा स्वदेशं **जङ्गला**वनिमात्मसात् कृत्वा स्वाधीनं विधाय, तथा वैरिषु शत्रुषु शोभां जयलक्ष्मीमासाद्य प्राप्य, 'आग्रहोऽनुग्रहे ग्रहे, आसङ्गाक्रमणयोश्च' इत्यनेकार्थः ॥ २२१-२२२

**साम्राज्यतिलकं साहिकरेणाचीकरत्तराम् ।**
**कल्याणमल्लराजस्य स्वामिकृत्यपरायणः ॥ २२३**

**व्याख्या**—स्वामिकृत्ये प्रभुकार्ये परायणः प्रवणः स्वामिकृत्यपरायणः, श्री**नगराज**मन्त्री, **कल्याणमल्ल**राजस्य साहि-करेण **सेरपातिसाहि**हस्तेन, साम्राज्यतिलकं राज्यविशेषकमचीकरत्तरां विशेषेण कारयति स्म ॥ २२३

**राजानं प्रेषयामास विक्रमाख्यपुरं प्रति ।**
**स्वयं त्वनुययौ साहेर्न सन्तः स्वार्थलम्पटाः ॥ २२४**

**व्याख्या**—श्री**नगराजो** मन्त्री राजानं **कल्याणमल्लं विक्रमाख्य**पुरं प्रति प्रेषयामास मुमोच । स्वयं त्वात्मना साहेः **सेरसाहे**रनुययावनुजगाम । साहिना सममगमदित्यर्थः । यतः सन्तः सत्पुरुषाः स्वार्थलम्पटाः स्वार्थलालसा न । स्वार्थ-मेवैकं नापेक्षन्त इत्यर्थः । ततोऽयमपि स्वार्थे कृतेऽपि तत्सेवां न तत्याजेति । 'लम्पटं लालसं विदुः' इति **हलायुधः** ॥ २२४

**गूढमन्त्रबलाक्रान्तदुर्दान्तरिपुसन्ततिः ।**
**सम्मानितोऽधिकं योऽत्र साहिना सेरसाहिना ॥ २२५**

**व्याख्या**—यः श्री**नगराजः**, अत्र **डिल्लीमण्डले सेरसाहिना** साहिनाऽधिकमतिशयेन सम्मानितः सत्कृतः । किम्भूतः ? गूढमन्त्रबलेन गुप्तालोचसामर्थ्येन, आक्रान्ता वशीकृता दुर्दान्ता [दुर्दमनीया] रिपुसन्ततिः शत्रुसमूहो येन स गूढमन्त्रबलाक्रान्तदुर्दान्तरिपुसन्ततिः ॥ २२५

**आज्ञामासाद्य साहेस्तामन्यदा मन्त्रिनायकः ।**
**सन्तोषपोषभृज्जातः स्वदेशमभिगामुकः ॥ २२६**

**व्याख्या**—अन्यदा अन्यस्मिन् काले, मन्त्रिनायकः सचिवमुख्यः श्री**नगराजः**, साहेस्तां स्वदेशे याहीति लक्षणामा-ज्ञामादेशमासाद्य प्राप्य, स्वदेशं **जङ्गलदेश**मभि अभिमुखं गामुको गमनशीलः सन्, सन्तोषपोषं सन्तोषः स्वास्थ्यं तस्य पोषं पुष्टिं बिभर्तीति सन्तोषपोषभृज्जातः । गामुक इति 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इति शीलार्थ उकञ् । 'अभिवीप्सालक्षणयोरित्थम्भूताभिमुख्ययोः' इति ॥ २२६

**तूर्णं पथि समागच्छन् मन्त्री पूर्णमनोरथः ।**
**अजमेरुपुरे स्वर्गमगात् पण्डितमृत्युना ॥ २२७**

**व्याख्या**–मन्त्री श्रीनगराजस्तूर्णं शीघ्रं पथि वर्त्मनि समागच्छन्, पूर्णो निष्ठां प्राप्तो मनोरथो वैरनिर्यातनादिलक्षणोऽभिलाषो यस्य स पूर्णमनोरथः एवंविधः सन्, **अजमेरुपुरे** पण्डितमृत्युना पण्डितमरणेन अनशनादिविधिना स्वर्गं देवालयमगाज्जगाम ॥ २२७

**ततः कल्याणमल्लोऽभूद् राजा कल्याणकारणम् ।**
**यः स्वयं सृष्टिरक्षार्थं विधिना निर्मितः किमु ॥ २२८**

**व्याख्या**–ततोऽनन्तरम्, साहिना स्वकरेण राज्यतिलके दत्ते सति, **कल्याणमल्लो** राजाऽभूत् । किम्भूतः ? कल्याणस्य श्रेयसः कारणं हेतुः । यः कल्याणमल्लः सृष्टिरक्षार्थं स्वनिर्मितप्रजालक्षणनिर्माणपालनाय स्वयमात्मना विधिना वेधसा, किमु इति वितर्केऽव्ययम्, निर्मितः सृष्टः । 'सृष्टिः स्वभावे निर्माणे' इत्यनेकार्थः ॥ २२८

**येन दानादिधर्मेण कलिः कृतयुगीकृतः ।**
**खलाः खण्डीकृता येन वशिना निशितासिना ॥ २२९**

**व्याख्या**–येन **कल्याणमल्लेन** दानादिधर्मेण आहूय वितरणादिसुकृतेन, कलिरन्त्यो युगः कृतयुगीकृतः कृतयुगाचरणीयाचरणात् कलौ कृतयुगमेवावतारित इत्यर्थः । 'कलिर्बिभीतके शूरे विवादेऽन्त्ययुगे युधि ।' इत्यनेकार्थः । तथा, येन वशिना जितेन्द्रियेण, निशितासिना तीक्ष्णकरवालेन, खला दुर्जनाः, खण्डीकृतास्तिलतिलीकृता दूरीकृता इत्यर्थः । नह्यन्येन खलाः पिण्याकाः खण्डीकर्तुं मधुधूलितया विधातुं शक्यन्त इति च्छायार्थः ॥ २२९

**नगराजमन्त्रिराजाङ्गजास्त्रयः पुण्यभाजनं जगति ।**
**नावलदेवीजाता जाता जगतीषु विख्याताः ॥ २३०**

**व्याख्या**–**नगराज**मन्त्रिराजस्य अङ्गजाः पुत्रास्त्रयः, जगतीषु भूमिषु, विख्याता विश्रुता जाताः सञ्जाताः । किम्भूताः ? जगति विष्टपे, पुण्यभाजनं सुकृतपात्रम् । पुनः किम्भूताः ? **नावलदेव्यां 'हांसू'** इति कुलगृहनाम्ना ख्यातायां जाता उत्पन्ना नावलदेवीजाताः ॥ २३०

तानेव पुत्रान् नामत आह–

**तेष्वादिमः सुबुद्धिर्मन्त्री देवाभिधः सुधावचनः ।**
**राणाभिधो द्वितीयो गुणाद्वितीयस्तृतीयोऽथ ॥ २३१**
**सङ्ग्रामः सङ्ग्रामे लब्धजयो ग्रामणीरमात्येषु ।**
**भाग्यबली बलकलितः कल्याणनरेन्द्रसम्मान्यः ॥ २३२**–युग्मम् ।

**व्याख्या**–तेषु त्रिषु पुत्रेषु मध्य आदिमः प्रथमो **देवाभिधो** मन्त्री बभूवेति गम्यते । किम्भूतः ? सुबुद्धिः शोभना जिनागमश्रवणप्रवणा बुद्धिर्धीर्यस्यासौ सुबुद्धिरिति स्वरूपनिरूपकं विशेषणम् । पुनः किम्भूतः ? सुधावन्मृष्टं वचनं गीर्यस्यासौ सुधावचनः । तथा द्वितीयः पुत्रो **राणाभिधः** । किम्भूतः ? गुणैर्दानशौण्डत्वादिभिरद्वितीयः असम एतत्समो गुप्तदानादिदाता नान्य इत्यर्थः । अथानन्तरं तृतीय उच्यते **सङ्ग्रामो** मन्त्री । किम्भूतः ? सङ्ग्रामे रणे लब्धः प्राप्तो जयो विजयो येन स लब्धजयः । तथाऽमात्येषु मन्त्रिषु ग्रामणीर्मुख्यः । तथा भाग्यस्यैव बलं सामर्थ्यं यस्यासौ भाग्यबली । तथा बलेन सैन्येन कलितः सहितः । तथा कल्याणनरेन्द्रेण **कल्याणमल्ल**नृपेण सम्मान्यः सत्करणीयः ॥ २३१–२३२

**देवाङ्गजास्त्रयोऽमी मेहाजलाभयमाननामानः ।**
**राणासुतः सुधोपमवचनतयाऽभूदमृतनामा ॥ २३३**

**व्याख्या**–अमी **मेहाजला**द्यास्त्रयो देवाङ्गजा **देवामन्त्रिपुत्राः** । राणासुतो मन्त्रि**राणा**पुत्रोऽ**मृत**नामाऽभूत् । नन्वमृतेति नाम तस्य कथमवादिषुः ? इति तत्कारणमाह–सुधोपमवचनतया सुधोपमममृतसमं वचनं यस्यासौ सुधोपमवचनस्तद्भावस्तत्ता तया, अमृतसमवाक्यवक्तृत्वेनामृत इति नाम कथयामासुरित्यर्थः ॥ २३३

सङ्ग्रामसचिवस्यासीत् पत्नीत्रयमदोऽद्भुतम् ।
दानशीलतपोभावधर्ममर्मप्रभावकम् ॥ २३४

**व्याख्या**—सङ्ग्रामसचिवस्य सङ्ग्राममन्त्रिणः, अदो वक्ष्यमाणमद्भुतमाश्चर्यकारि पत्नीत्रयमासीद् बभूव । किम्भूतम् ? दानशीलतपोभावरूपधर्माणां यन्मर्म, जीवप्रदेशप्रचयस्थानं मर्म यत्र जायमानवेदना महती जायते, तदिवान्तस्तत्त्वमित्यर्थः । तत्प्रभावकमुद्भासकं दानशीलतपोभावधर्ममर्मप्रभावकम् ॥ २३४

अथ पत्नीत्रयं नामतः प्राह—

तत्र सुरताणदेवी भगतादेवी सुरूपदेवी च ।
गुरुदेवधर्मरक्ता सिद्धान्ताकर्णनासक्ता ॥ २३५

**व्याख्या**—तत्र सङ्ग्राममन्त्रिमन्दिरे सुरताणदेवी भगतादेवी सुरूपदेवी च । किम्भूता ? गुरुदेवधर्मेषु रक्ता रागवती गुरुदेवधर्मरक्ता । तथा सिद्धान्ताकर्णने जैनागमश्रवण आसक्ता प्रवणा सिद्धान्ताकर्णनासक्ता ॥ २३५

श्रीसेरसाहिसाहिः सगौरवं मुदितमानसो विधिना ।
ज्ञात्वा बुद्धिनिधानं मन्त्रिपदे यं दधाति स्म ॥ २३६

**व्याख्या**—यं सङ्ग्राममन्त्रिणं श्रीसेरसाहिसाहिः, सगौरवं सबहुमानं यथा स्यात्तथा, मुदितमानसो हृष्टचेताः सन्, विधिना यथोक्तप्रकारेण, मन्त्रिपदे सचिवपदव्याम्, दधाति स्म धारयामास । मन्त्रिपदं दत्तवानित्यर्थः । किं कृत्वा ? बुद्धिनिधानं धीनिधिं ज्ञात्वा अवगम्य ॥ २३६

श्रीअर्बुदोज्जयन्ताचलयोर्विमलाचले च विमलमतिः ।
यो यात्रां सुभटव्रजविराजितो विहितवान् विधिना ॥ २३७

**व्याख्या**—यः श्रीसङ्ग्राममन्त्री, विधिना शास्त्रोक्तप्रकारेण, श्रीअर्बुदोज्जयन्ताचलयोः श्रीअर्बुद-रैवतगिर्योश्च, पुनर्विमलाचले श्रीशत्रुञ्जये, सुभटव्रजेन भटसमूहेन, विराजितः शोभमानः सन्, यात्रां विहितवांश्चक्रे । किम्भूतः ? विमला निर्मला मतिर्धिषणा यस्यासौ विमलमतिः ॥ २३७

यः कृतवान् करमुक्तं तीर्थं शत्रुञ्जयं न करमुक्तम् ।
सेवकलोकं कृतवान् सभागधेयो जनादेयः ॥ २३८

**व्याख्या**—यः सङ्ग्राममन्त्री शत्रुञ्जयं तीर्थं पुण्डरीकाद्रिं करो राजग्राह्यो भागस्तेन मुक्तं रहितं कृतवान् । न सेवकलोकं भक्तजनं करमुक्तं पाणिमुक्तं कृतवान् । न पाणिना सेवकान् मुमोचेत्यर्थः । किम्भूतः ? सभागधेयो भाग्यसहितः । तथा जनेषु मध्य आदेयो ग्राह्यनामा जनादेयः ॥ २३८

योऽन्येषु व्यवहारिषु कोटीशेष्वपि यशोर्थरसिकेषु ।
मिलितेष्वपीन्द्रमालां परिधत्ते स्माशु विमलाद्रौ ॥ २३९

**व्याख्या**—यः श्रीसङ्ग्राममन्त्री, अन्येषु परेषु नानादेशेभ्यो यात्रार्थमागत्य मिलितेष्वपि सङ्घटितेष्वपि, व्यवहारिषु व्यापारिभ्विभ्येषु, आशु शीघ्रम्, विमलाद्रौ श्रीशत्रुञ्जये, इन्द्रमालां लोकप्रसिद्धाम्, परिधत्ते स्म परिदधौ । किम्भूतेषु ? कोटीशेष्वपि कोटिसंख्यद्रव्यस्वामिष्वपि । पुनः किम्भूतेषु ? यश एवार्थो द्रव्यं तत्र रस आसक्तिर्विद्यते येषां ते, स्वार्थे के, यशोर्थरसिकास्तेषु ॥ २३९

याचकसार्थं विदधे सार्थं स्वर्णाश्ववस्त्रदानाद्यैः ।
यः कीर्तिराशितटिनीं कृतवाननिवारितप्रसराम् ॥ २४०

**व्याख्या**–यः सङ्ग्राममन्त्री याचकसार्थं वनीपकसङ्घम्, स्वर्णाश्ववस्त्रदानाद्यैर्हेमवाजिवसनवितरणादिभिः, सार्थं सधनम्, विदधे चक्रे । यः कीर्तिराशिरेव यशोराशिरेव तटिनी निम्नगा तां कीर्तिराशितटिनीमनिवारितोऽस्खलितः प्रसरः प्रवर्तनं यस्याः साऽनिवारितप्रसरा तामनिवारितप्रसरां कृतवान् ॥ २४०

**यात्रां विधातुकामोऽयं येषु येषु पुरादिषु ।**
**जगाम तेषु सर्वेषु सचक्रे धार्मिकव्रजम् ॥ २४१**

**व्याख्या**–अयं श्रीसङ्ग्राममन्त्री, यात्रां विमलाद्रिमुख्यतीर्थेषु विधातुकामः कर्तुकामः, येषु येषु पुरादिष्वादिशब्दाद् ग्रामेषु जगाम अगच्छत्, पादावधारणमकरोदिति यावत् । यच्छब्दे पुनरावृत्तिर्न तच्छब्दे । यथा यो यो धूमवान् सोऽग्निमानित्यादिष्विवात्र तच्छब्दैकस्यैव प्रयोगः कविना प्रयुक्तः । तेषु सर्वेषु पुरादिषु, धर्मं चरन्ति धार्मिकास्तेषां व्रजं वृन्दं सचक्रे लम्भनिकादानेन सत्कृतवान् ॥ २४१

**यस्मिन् यस्मिन् पुरेऽगच्छत् तत्र तन्नगरेशिता ।**
**सम्मुखागमनेनास्य प्रवेशोत्सवमातनोत् ॥ २४२**

**व्याख्या**–सङ्ग्राममन्त्री तीर्थयात्रायाम्, यस्मिन् यस्मिन्निति सामान्यतः प्रयोगस्तेषां पुराणां बहुत्वसूचकः, यस्मिन् यस्मिन् पुर उपलक्षणाद् ग्रामेऽगच्छत् तत्र पुरे ग्रामे च, तन्नगरेशिता तत्पुरनायकः, उपलक्षणाद् ग्रामनायकश्च, अस्य श्रीसङ्ग्राममन्त्रिणः सम्मुखागमनेनाभिमुखसमागमनेन, प्रवेशोत्सवं पादप्रसारमातनोद् विस्तारयामास ॥ २४२

**वलमानो महामन्त्री चित्रकूटमुपागतः ।**
**रानकोदयसिंहेन विशिष्य बहुमानितः ॥ २४३**

**व्याख्या**–वलमानस्तीर्थयात्रातो व्याघुट्य आगच्छन्, महामन्त्री श्रीसङ्ग्रामः, चित्रकूटमुपागतः प्राप्तः सन्, रानकोदयसिंहेन राणोदयसिंहेन, विशिष्य विशेषेण बहुमानितः सत्कृतः ॥ २४३

**ग्रामव्रजान् गजानश्वान् स्वामिधर्मधनाग्रणीः ।**
**सञ्जग्राहाग्रहाद् ग्राह्यमाणानपि न योऽमुना ॥ २४४**

**व्याख्या**–यः श्रीसङ्ग्राममन्त्री, अमुना उदयसिंहेन, आग्रहादनुग्रहेण, ग्रामव्रजान् ग्रामसमूहान्, तथा गजान् हस्तिनः, तथा अश्वान् वाजिनः, ग्राह्यमाणानपि स्वीकार्यमाणानपि, न सञ्जग्राह न अगृह्णात् । राणोदयसिंहेन बहूक्तं यद्–'हे महामन्त्रिन् ! एतान् ग्रामादीन् त्वं स्वीकुरु', परमसौ न स्वीकृतवान् । तत्र हेतुमाह–यतः किम्भूतः ? स्वामिनो धर्मः स्वामिधर्मः स एव धनं येषां ते स्वामिधर्मधनास्तेषां मध्येऽग्रणीर्मुख्यः स्वामिधर्मधनाग्रणीः, अयमधिकः स्वामिधर्मेत्यर्थः । यो हि स्वामिधर्मा भवति स परकीयग्रामादिग्रहणेन न परसेवां विदधीत । अत एवासौ तद्ग्राह्यमाणानपि तान् न स्वीचकारेति तात्पर्यार्थः । 'आग्रहोऽनुग्रहे ग्रहे, आसङ्गाक्रमणयोः' इति ॥ २४४

**राज्ञा कल्याणमल्लेनाप्रतिमल्लेन तेजसा ।**
**आहूतः सन् समं वार्तां कृत्वा श्रीमालभूभुजा ॥ २४५**
**सेनापरिवृतः प्रौढप्रतिभाप्रतिभोऽधिकम् ।**
**मध्यदेशमनाध्यास्याऽऽययौ यो निजमण्डले ॥ २४६–युग्मम् ।**

**व्याख्या**–यः सङ्ग्राममन्त्री कल्याणमल्लेन राज्ञा नृपेण, आहूत आकारितः सन्, अन्तराले श्रीमालभूभुजा मालदेवेन समं वार्तां किंवदन्तीं कृत्वा, सेनापरिवृतश्चमूपरिकरितः सन्, मध्यदेशं योधपुरदेशमनाध्यास्य अनधिष्ठाय, मध्यदेशेऽवस्थानमकृत्वेत्यर्थः, निजमण्डल आत्मीयदेशे जङ्गल आययावायासीत् । किम्भूतेन कल्याणमल्लेन ? तेजसा प्रतापेन अप्रतिमल्लेन असदृशेन अधिकतेजस्विनेत्यर्थः । किम्भूतो मन्त्री ? प्रौढा शास्त्रप्रवणात् प्रवृद्धा या प्रतिभा धिषणा तया प्रतिभाति शोभत इति प्रौढप्रतिभाप्रतिभः, अधिकमतिशयेन, यत एव बुद्धिमानत एव परैः सह अन्यामेव वार्तां विधाय, अन्यदेव स्वहितं कर्म अकार्षीदिति तत्त्वम् ॥ २४५–२४६

**यस्तोरणादिसामग्र्या वाद्यवादनपूर्वकम् ।**
**सम्मुखायातराजन्यचक्रोऽगाद् वैक्रमे पुरे ॥ २४७**

**व्याख्या**–यः श्रीसङ्ग्रामो मन्त्री, तोरणादिसामग्र्या तोरणवन्दनमालादिसमुदायघटनया, वाद्यानां तूर्यादीनां यद्वादनं तत्पूर्वकम्, सम्मुखमभिमुखमायातं पादप्रसारार्थं समेतं, राजन्यचक्रं क्षत्रियवृन्दं, यस्य स सम्मुखायातराजन्यचक्रः, एवंविधो **वैक्रमे** विक्रमनृपनाम्ना विहिते पुरे अगाज्जगाम । विक्रमस्येदं वैक्रममिदमर्थेऽण् ॥ २४७

**याचकेभ्यो यथायोग्यं दत्त्वा दानमनीदृशम् ।**
**दृशमुद्घाटयामास कृपया कृपणात्मनाम् ॥ २४८**

**व्याख्या**–यः श्रीसङ्ग्रामो मन्त्री, याचकेभ्योऽर्थिभ्यः यथायोग्यमौचित्यानतिक्रमेण, अनीदृशं नेदृशं सामान्यजनानुष्ठेयमनीदृशमतिशायि दानं दत्त्वा, कृपया दयया, कृपणात्मनां कार्पण्योपहतानां पुंसाम्, दृशं दृष्टिमुद्घाटयामास । तेऽतिशायि दानमस्य दृष्ट्वा मनस्यचिन्तयन् अहो ! अस्य दातृत्वं लोकोत्तरमिति तेषां दृष्टिरुद्घाटिता । तत्र तथाविधदानेन तद्दृष्ट्युद्घाटने कृपैव कारणम्, एतेऽपि तपस्विनश्चक्षुषी उन्मील्य पश्यन्त्विति करुणा मन्त्रिराजस्याजायत । अन्योऽपि यः कारुणिको भवति स एव परदृगुन्मीलनं विदधीते इति च्छायार्थः ॥ २४८

**कुर्वन् कृत्यं स्वभक्तानामुपकृत्य सुहृज्जनम् ।**
**वैरिवारमपाकृत्य ससुखं तस्थिवानयम् ॥ २४९**

**व्याख्या**–अयं श्रीसङ्ग्रामो मन्त्री, स्वभक्तानां स्वीयसेवकानाम्, कृत्यं ग्रामदानादिकार्यम्, कुर्वन् विदधत्, ससुखं सुखापेतं यथा स्यात्तथा, तस्थिवान् तस्थौ । किं कृत्वा ? सुहृज्जनं मित्रलोकम् उपकृत्यानुकूलाचरणेन प्रतिकूलवारणेन चोपकारं कृत्वा, तथा वैरिवारं शत्रुवृन्दमपाकृत्य दूरीकृत्य, यावद् वैर्येकोऽपि स्यात् तावत् सुखं कुतः ? यदुक्तं **माघे**–
'म्रियते यावदेकोऽपि शत्रुस्तावत्कुतः सुखम् । पुरः क्लिश्नाति सोमं हि सैंहिकेयो सुरद्रुहाम् ॥' २४९

**श्रीजिनचन्द्रसूरीणां समग्रगुणशालिनाम् ।**
**क्रियोद्धारमहश्चक्रे येन वित्तव्ययेन वै ॥ २५०**

**व्याख्या**–येन श्रीसङ्ग्राममन्त्रिणा, समग्राः समस्ता ये गुणा ज्ञानादयस्तान् शालन्ते श्लाघन्त इत्येवंशीलाः समग्रगुणशालिनः, तेषां श्री**जिनचन्द्र**सूरीणां, वै पादपूरणे, वित्तव्ययेन द्रव्योत्सर्गेण, क्रियोद्धारस्य साधुमार्गशैथिल्यपरित्यागलक्षणस्य, यो मह उत्सवस्तं चक्रे व्यधात् । 'वै हेतौ पादपूरणे' इति ॥ २५०

**साधूनध्ययनोद्युक्तान् ज्ञानदानोत्कमानसः ।**
**न्यायशास्त्रविदां पार्श्वे विद्यापारदृशामिह ॥ २५१**
**न्यायशास्त्राण्यनेकानि शासनोन्नतिहेतवे ।**
**यथेहितार्थदानेनाध्यापयामास योऽनिशम् ॥ २५२**–युग्मम् ।

**व्याख्या**–इह **विक्रमपुरे**, यः श्रीसङ्ग्राममन्त्री, अनिशं सदा, साधून् यतिनः, न्यायशास्त्राणि विदन्ति जानन्तीति न्यायशास्त्रविदस्तर्कशास्त्रपाठकाः, तेषां पार्श्वे सविधे, शासनोन्नतिहेतवे श्रीजिनशासनोदयनिमित्तम्, न्यायशास्त्राणि **शशधर-वर्धमान-तत्त्वचिन्तामण्या**दीनि तर्कशास्त्राणि, अध्यापयामास अध्यजीगपत् । केन ? यथेहितार्थदानेन–ईहितार्थदानमनतिक्रम्य यथेहितार्थदानं तेन । 'यथाऽसादृश्ये' इत्यव्ययीभावः समासः । अभिलषितप्रतिदिनराजतदानेनेत्यर्थः । किम्भूतान् साधून् ? अध्ययनाय पठनायोद्युक्तानुद्यमिनः, अपर्यध्ययनानित्यर्थः । अध्ययनाय परिग्लानः पर्यध्ययनः । किम्भूतो मन्त्री ? ज्ञानदानाय उत्कमुत्सुकं मानसं मनो यस्यासौ ज्ञानदानोत्कमानसः । किम्भूतानां न्यायशास्त्रविदाम् ? विद्यानां षडङ्ग्यादिचतुर्दशसंख्यानां पारं पर्यन्तं पश्यन्तीति विद्यापारदृशस्तेषां विद्यापारदृशाम् ॥ २५१–२५२

**चैत्यं शत्रुञ्जये जैनमकार्षीत् पुण्यवृद्धये ।**
**योऽन्यत्क्षेत्रं शुभं नास्मादिति निश्चित्य चेतसि ॥ २५३**

**व्याख्या** – यः श्रीसङ्ग्राममन्त्री, चेतसि चित्त इति निश्चित्य निर्णीय, पुण्यवृद्धये सुकृतपुष्ट्यै, **शत्रुञ्जये** विमलाद्रौ, जैनमार्हतं चैत्यं विहारमकार्षीच्चकार । इतीति किम् ? अस्माच्चैत्यान्नान्यत् क्षेत्रं शुभम् । 'क्षेत्रं भरतादौ भगाङ्गयोः, केदारे सिद्धभूपत्न्योः' – इत्यनेकार्थः । उपलक्षणं च केदारः । सस्यनिष्पत्तिस्थानस्य अधिकृते तु पुण्यधान्यनिष्पत्तिस्थानं क्षेत्रं गृह्यते ॥ २५३

**दानशालां च यस्तेने दुर्भिक्षे भिक्षुकाक्षमे ।**
**क्षुत्क्षामकुक्षिलोकानां समुद्धरणबद्धधीः ॥ २५४**

**व्याख्या** – यः **सङ्ग्राम**मन्त्री, भिक्षुका भिक्षाका रङ्का भिक्षाया अप्राप्तेरक्षमा असमर्था यत्र तत्तस्मिन् भिक्षुकाक्षमे, दुर्भिक्षे दुष्काले, क्षुधा बुभुक्षया, क्षामा कृशा, कुक्षिरुदरं येषामेवंविधा ये लोकास्तेषाम्, समुद्धरणे पालने, बद्धा नियोजिता धीर्बुद्धिर्येन स समुद्धरणबद्धधीः, एवंविधः सन् दानशालां सत्रशालां तेने विस्तारयामास ॥ २५४

**पौषधशाला विपुला विनिर्मिता येन भूरिभाग्येन ।**
**मातुः पुण्यार्थं यन्माता मान्या सुधन्यानाम् ॥ २५५**

**व्याख्या** – येन भूरिभाग्येन भूयिष्ठभागधेयेन श्री**सङ्ग्राम**मन्त्रिणा, मातुर्जनन्याः, पुण्यार्थं पुण्यकृते, विपुला विस्तीर्णा, पौषधशाला विनिर्मिता । अन्तर्भूतण्यर्थत्वान्निर्मापिता कारिता । यद्यस्माद्धेतोः, सुधन्यानां सुष्ठुपुण्ययुतानाम्, माता मान्या सत्करणीया । यतः –

> 'आस्तन्यपानाज्जननी पशूनामादारलाभाच्च नराधमानाम् ।
> आगेहकर्माणि च मध्यमानामाजीवितं तीर्थमिवोत्तमानाम् ॥ १ ॥' ॥ २५५

**चतुर्विंशतिवारान् यः स्वमातुः पुण्यवृद्धये ।**
**पुरे लम्भनिकां चक्रे रूप्यरौप्येण वैक्रमे ॥ २५६**

**व्याख्या** – यः **सङ्ग्राम**मन्त्री, स्वमातुरात्मीयजनन्याः, पुण्यवृद्धये सुकृतपुष्ट्यै, चतुर्विंशतिवारान्, **वैक्रमे** पुरे, रौप्यरौप्येण राजतराजतेन, लम्भनिकां चक्रे कारयामास ॥ २५६

**शोभां यो जन्ययात्रायाश्चित्रकूटे निजेशितुः ।**
**विवाहेऽन्यमहीशेभ्योऽधिकां चक्रेऽर्थितार्पणात् ॥ २५७**

**व्याख्या** – यः श्री**सङ्ग्रामः**, **चित्रकूटे**, निजेशितुः श्री**कल्याणमल्ल**स्य, विवाहे पाणिपीडने, अन्यमहीशेभ्योऽपरनृपेभ्यः, अधिकामतिशायिनीं जन्ययात्रायाः शोभां लक्ष्मीं चक्रे चकार । कस्माद् ? अर्थितानां यथाकामं याचितानां स्वर्णादीनामर्पणाद् दानादर्थितार्पणात् । 'जन्यो जामातृवत्सले जनके जननीये च' इति । जामातृवत्सले जामातृबन्धुवर्गे ॥ २५७

**हाजीषां-हसनकुलीषानाभ्यां सह विधाय सन्धिं यः ।**
**निजराज्यजैनमन्दिरसाधर्मिकरक्षणं विदधे ॥ २५८**

**व्याख्या** – यः **सङ्ग्राम**मन्त्री, हाजीषां-हसनकुलीषानाभ्यां सह सन्धिं सन्धानमेकत्वम्, विधाय कृत्वा, निजराज्यजैनमन्दिर-साधर्मिकरक्षणं स्वसाम्राज्यजैनविहार-समानधर्मावनं विदधे चक्रे ॥ २५८

**एवं श्रीजिनशासनसमुन्नतिं सर्वतः समाधाय ।**
**अकलङ्कः कलिकाले कालवशोऽभूत् स पुण्यात्मा ॥ २५९**

**व्याख्या**–स पुण्यात्मा–पुण्यः पावन आत्मा यस्याऽसौ पुण्यात्मा श्रीसङ्ग्रामः, एवममुना प्रकारेण, श्रीजिनशासनसमुन्नतिं श्रीजिनशासनोदयम्, सर्वतः सर्वासु दिक्षु, समाधाय संस्थाप्य, कलिकाले कलियुगे, अकलङ्को निरपवादः सन्, कालवशोऽभूत् सुरालयं प्रापेत्यर्थः। 'कलङ्कोऽङ्कापवादयोः कालीयसमले चापि' इत्यनेकार्थः॥ २५९

**राज्ञीरत्नावतीकुक्षिरत्नं कल्याणनन्दनाः।**
**रायसिंहो रामसिंहः सुरत्राणश्च पार्थिवः॥ २६०**
**अन्यपत्नी सुता अन्ये भांण-गोपालनामकौ।**
**अमरो राघवः सर्वे विख्याताः सर्वदाऽभवन्॥ २६१** –युग्मम्।

**व्याख्या**–कल्याणनन्दनाः **कल्याणमल्लनृपपुत्राः**, सर्वे सर्वदा, विख्याता विश्रुता अभवन्। तानेवाह–राज्ञी-**रत्नावत्याः** पट्टदेव्याः कुक्षौ रत्नमिव राज्ञीरत्नावतीकुक्षिरत्नं **रायसिंहो रामसिंहः सुरत्राणः पार्थराट्** पृथ्वीराजश्च। अन्यासां पत्नीनां सुता अन्यपत्नीसुता **भांण-गोपालौ अमरो राघव** इत्यादयः॥ २६०–२६१

**मन्त्रिसङ्ग्रामसंभूतौ कर्मचन्द्रयशस्विनौ।**
**कर्मचन्द्रः क्रमान्मन्त्रकलासु कुशलोऽभवत्॥ २६२**

**व्याख्या**–मन्त्रिसङ्ग्रामात् सम्भूतौ जातौ मन्त्रिसङ्ग्रामसम्भूतौ, **कर्मचन्द्र-यशस्विनौ** विद्येत इति गम्यते। **कर्मचन्द्रनामा जसवन्तश्च**। तत्र कर्मचन्द्रः क्रमात् क्रमेण, मन्त्रकलास्वालोचशिल्पेषु, कुशलश्चतुरोऽभवद् बभूव॥ २६२

**कल्याणमल्लभूपतिरमात्यपदवीमदात् प्रयत्नेन।**
**यस्य प्रशस्यलक्षणमतिविभवौ वीक्ष्य सविशेषम्॥ २६३**

**व्याख्या**–कल्याणमल्लभूपतिर्यस्य श्री**कर्मचन्द्रस्य**, प्रशस्यं प्राप्तश्लाघं यल्लक्षणं हस्तपादादिषूर्ध्वरेखादिचिह्नम्, मति-विभवश्च बुद्धिधनम्, तौ प्रशस्यलक्षण-मतिविभवौ सविशेषं विशेषौ वैशिष्ट्यं तत्सहितं यथा स्यात्तथा, वीक्ष्य विलोक्य, प्रयत्नेन महतोद्यमेन, अमात्यपदवीं मन्त्रिपदमदाद् ददौ॥ २६३

**शत्रुञ्जयेऽर्बुदे स्तम्भतीर्थे तीर्थे च रैवते।**
**परिवारयुतो यात्रां यः कृत्वा पुण्यवानभूत्॥ २६४**

**व्याख्या**–यः श्रीकर्मचन्द्रमन्त्री, शत्रुञ्जये **विमलगिरौ** अर्बुदेऽर्बुदाचले **स्तम्भतीर्थे रैवते** चोज्जयन्ते, तीर्थे पुण्यक्षेत्रे, परिवारयुतः सपरिच्छदः, यात्रां कृत्वा पुण्यवान् सुकृत्यभूद् बभूव॥ २६४

**श्रीराजसिंहराजेन्द्रो नव्यः कल्पतरुः कलौ।**
**सुमनःसन्ततिं रक्षन् यत्फलत्यनुवासरम्॥ २६५**

**व्याख्या**–कलौ कलियुगे, **श्रीराजसिंह**राजेन्द्रो नव्यो नवीनः, कल्पतरुः कल्पशाखी, यद्यस्माद्धेतोः, अनुवासरं प्रतिदिनम्, सुमनःसन्ततिं सुमनःश्रेणिम्, रक्षन् त्रायमाणः सन्, फलति निष्पद्यते। फल् निष्पत्तौ। सुमनसः प्राज्ञाः पुष्पाणि च। अन्यो हि यः कल्पवृक्षो यदा फलति तदा सुमनसां पुष्पाणां सन्ततिं न रक्षति किन्तु पुष्पाण्यपनीय पश्चात् फलति। यतः–

'फलस्य कारणं पुष्पं फलं पुष्पविनाशकम्। धर्मस्य कारणं पुण्यं धर्मः पुण्यविनाशकः॥ १॥'

अयं तु सुमनःसन्ततिं रक्षन् फलतीति नवत्वमस्य। अत्र पक्षे सुमनसां प्राज्ञानां सन्ततिं रक्षन्नसौ यथार्थितदानेन फलतीति गर्भार्थः॥ २६५

**आशाभेदाद् भवन्त्यन्ये लोकपाला महीतले।**
**आशासम्पूरणान्नूनं लोकपालोऽयमद्भुतः॥ २६६**

**व्याख्या**–अन्येऽपरे लोकपालाः सोमयमवरुणकुबेराख्याः, महीतले भूतले, आशाभेदादाशानां पूर्वादिदिशां भेदाद् भिन्नतया भवन्ति । प्राच्याः सोमः, दक्षिणस्या यमः, पश्चिमाया वरुणः, उत्तरस्याः कुबेरोऽधिपतिरिति दिग्भेदात् ते लोकपालाः, नूनं निश्चितमयं प्रत्यक्षोपलभ्यमानः श्रीरायसिंहः, आशासम्पूरणाद् वाञ्छाप्रपूरणाद्, अद्भुतो नवो लोकपालः । अयमपि लोकपालस्तेऽपि लोकपालाः । परं त आशाभेदाल्लोकपालाः, अयं त्वाशापूरणादित्यद्भुतत्वमस्य । 'आशा ककुभि तृष्णायाम्' इत्यनेकार्थः ॥ २६६

**पितृराज्यसुधाम्भोधिं वर्धयामास सन्ततम् ।**
**कलाभिर्वर्धमानाभिर्यो राजेव विराजितः ॥ २६७**

**व्याख्या**–यः श्रीरायसिंहः, वर्धमानाभिर्वृद्धिमासादयन्तीभिः, कलाभिः शिल्पैः, सन्ततं निरन्तरम् । पितृराज्यं कल्याणमल्लनृपसाम्राज्यमेव सुधाम्भोधिः क्षीरसागरस्तं वर्धयामास वर्धयति स्म । किम्भूतः ? राजेव चन्द्र इव, विराजितः शोभमानः । राजाऽपि कलाभिः षोडशांशरूपाभिर्वर्धमानाभिः सुधाम्भोधिं वर्धयत्येव । 'कला स्यात् कालशिल्पयोः । कलने मूलवृद्धौ, षोडशांशे विधोरपि ।' इति ॥ २६७

**श्रीराजसिंहनृपतेः साहाय्यमवाप्य सारबलकलितः ।**
**भाग्येन वर्धमानो मन्त्री सौभाग्यवान् जज्ञे ॥ २६८**

**व्याख्या**–मन्त्री श्रीकर्मचन्द्रः, श्रीराजसिंहनृपतेः साहाय्यं साहायकमवाप्य प्राप्य, सारबलेन प्रधानसैन्येन, कलितः सहितः सन्, सौभाग्यवान् सौभाग्यं जनवाल्लभ्यं तद्वान्, जज्ञे बभूव । सुभगो जात इत्यर्थः । किम्भूतः ? भाग्येन भागधेयेन, वर्धमानो वृद्धिमासादयन् । 'सहायाद्वा' इति वुञ् भावकर्मणोः साहायकम्, पक्षे यञ् साहाय्यमिति ॥ २६८

**राज्ञः कल्याणमल्लस्य सुदृष्ट्या कुमराश्रयात् ।**
**मन्त्रीशः साहसी सोऽभूत् सिंहः प्रक्षरितो यथा ॥ २६९**

**व्याख्या**–साहसं दुष्करकर्म अस्यास्तीति साहसी, स मन्त्रीशः श्रीकर्मचन्द्रः, कल्याणमल्लस्य राज्ञो नृपस्य, सुदृष्ट्या शोभनदृष्ट्या, तथा कुमराश्रयात् कुमर इति लोकरूढ्या नाम कविभिरपि कैश्चित्प्रयुक्तः कुमारत्वार्थे । यल्लक्ष्यम्–

'विभाव्याथ तयोर्भावं मुनिः कुमरमभ्यधात् । आतिथेयमिदं कन्या तुभ्यं योग्याय जायताम् ॥ १
अन्यदा कुमरोऽवादीत् सशोक इव वल्लभः । त्वत्पदे प्रहितो हन्त ! दुःखमास्ते सुहृन्मम ॥ २

इति **शीलतरङ्गिण्यामृषिदत्ताधिकारे** ।' तस्य आश्रय आश्रयणमङ्गीकरणं कुमराश्रयस्तस्माद् रायसिंहक्रोडीकारात्, यथेति सादृश्यार्थे, यथा सिंहः प्रक्षरितस्तथाऽभूत् । अपरिभवनीयो बभूवेति भावः ॥ २६९

**सोऽन्यदा श्रीकुमारेण सार्धं सेवाचिकीर्षया ।**
**जलालदीसुरत्राणसमीपे गन्तुमैहत ॥ २७०**

**व्याख्या**–स श्रीकर्मचन्द्रमन्त्री श्रीकुमारेण श्रीरायसिंहेन सार्धम्, सेवाचिकीर्षया सेवां कर्तुम्, **जलालदीसुरत्राणसमीपे** गन्तुं यातुमैहत अवाञ्छत् ॥ २७०

**कल्याणमल्लभूमीशं प्रणम्य विहिताञ्जलिः ।**
**मन्त्री विज्ञपयामास वाञ्छितं वद मां विभो ! ॥ २७१**

**व्याख्या**–मन्त्री श्रीकर्मचन्द्रः, कल्याणमल्लभूमीशं प्रणम्य प्रणामं कृत्वा, विहिताञ्जली रचिताञ्जलिः–'अञ्जलिर्मुकुलितकमलाकारौ पाणी ।' इतीति गम्यत इति विज्ञपयामास तोषयामास । इतीति किम् ? हे विभो ! प्रभो ! वाञ्छितमिष्टं वद कथय । किमिष्टं विभोः सम्पादयामीति मां निवेदयेत्यर्थः । विज्ञपयामासेति 'मारणतोषणनिशानेषु ज्ञे'ति मित्त्वे ह्रस्वत्वम्, मारणे संज्ञपयति शत्रुम्, तोषणे विष्णुं विज्ञपयाम्यहम्, निशाने प्रज्ञपयति शस्त्रम् ॥ २७१

**धराधीशोऽवदत् सर्वं वस्तु वेविद्यतेऽत्र मे ।**
**उद्यमस्तु त्वया कार्यः पूर्वजेप्साप्रपूरणे ॥ २७२**

**व्याख्या** – मन्त्रिणं प्रति धराधीशः **कल्याणमल्लो**ऽवदत् अब्रवीत् – हे मन्त्रिन्! सर्वं वस्त्वत्र मे मम वेविद्यते अतिशयेन विद्यते वेविद्यते । विदिंच् सत्तायां यङि रूपम् । तत्रार्थे न काऽपि स्पृहा । परन्तु विशेषे विशेषेण पूर्वजस्य **श्रीविक्रम**भूपतेर्येप्सा वाञ्छा, तस्याः प्रपूरणे निष्ठानयने, त्वया मन्त्रिणोद्यम उद्योगः कार्यः । ईप्सेति – 'आप्लृं व्याप्तौ', आपूज्ञपीतीत्वमभ्यासलोपः । अः प्रत्ययादिति प्रत्ययान्तधातोर्भावादौ स्त्रियामः स्यात् । वाञ्छार्थस्तु **क्रियाकलाप** उक्तः – 'इच्छति वाञ्छति काङ्क्षति कामयते लिप्सते वष्टि ईप्सत्यपेक्षते चे'त्यादि ॥ २७२

तामेव पूर्वजेच्छामाह –

**यद्येकामपि घटिकां गवाक्षमारुह्य सुभटपुरदुर्गे ।**
**तिष्ठामि सारणेश्वर ! तदा करिष्ये कमलपूजाम् ॥ २७३**

**व्याख्या** – हे सारणेश्वर ! यदि चेदेकामपि घटिकां सुभटपुरदुर्गे **योधपुर**कोट्टे, गवाक्षं वातायनमारुह्य अध्यास्य तिष्ठामि तदा त्वत्पुरः कमलपूजां लोकरूढ्या शिरसाऽर्चाम्, करिष्ये विधास्ये ॥ २७३

**दुःसाधामिति सन्धां सफलयितुं विक्रमाह्वराजस्य ।**
**श्रीराजसिंहसहितोऽनु चचार जलालदीसाहिम् ॥ २७४**

**व्याख्या** – इति पूर्वोक्तां **योधपुरदुर्ग**गवाक्षावस्थानलक्षणाम्, विक्रमाह्वराजस्य **विक्रमनृ**पतेः, दुःसाधां दुःखेन साध्यत इति दुःसाधा ताम्, सन्धां प्रतिज्ञाम्, सफलयितुं सफलीकर्तुम्, **श्रीराजसिंह**सहितः **श्रीकर्मचन्द्र**मन्त्री **जलालदीसाहिमकबरपातसाहि**मनु चचार । साहेः समीपे जगामेत्यर्थः । अनु सन्निधौ –

'अनु लक्षणवीप्सेत्थम्भूतभागेषु सन्निधौ । सादृश्यायामहीनेषु पश्चादर्थसहार्थयोः ॥'

'सन्धा स्थिति-प्रतिज्ञयोः' ॥ २७४

**सेवाकृत्यविधानैस्तथाऽधिकं स्वामिमानसं येन ।**
**विहितं प्रमोदपात्रं यथा तदन्यत्र न च रेमे ॥ २७५**

**व्याख्या** – येन **श्रीकर्मचन्द्रेण श्रीराजसिंह**सहितेन, सेवा च परिचर्या, कृत्यानि च वैरिप्रतिघातादीनि तेषां विधानैः करणैः, तथा तेन प्रकारेण, स्वामिमानसं साहिचित्तम्, अधिकमतिशयेन प्रमोदपात्रं प्रीतिभाजनं विहितम् । यथा तत् साहिमानसम्, अन्यत्रोम्बरादौ, न च रेमे न च चिक्रीड । तस्मिन्नेव मन्त्रिणि साह्लादं मन आसीदिति भावः ॥ २७५

**यद् यद् विषमं कृत्यं श्रीसिंहबलान्महामतिर्मन्त्री ।**
**तत्तत् साहिनियुक्तं साधितवान् लीलयैवाहो ! ॥ २७६**

**व्याख्या** – महामतिर्महाधिषणो मन्त्री श्रीकर्मचन्द्रः, यद्यत् कोट्टग्रहणादि विषमं कठिनं कृत्यं श्रीसाहिनियुक्तं **श्रीअकबर**पातसाहिना दत्तं, तत् तत् कृत्यं, श्रीसिंहबलात् **श्रीराजसिंह**सामर्थ्यात्, लीलयैव क्रीडयैव, साधितवान्निष्पादितवान् । अहो इति विस्मये ॥ २७६

**साहिप्रसादयोगाद् योधपुराधीशतां समासाद्य ।**
**कल्याणमल्लराजो येन गवाक्षे पुरा न्यस्तः ॥ २७७**

**व्याख्या** – येन **श्रीकर्मचन्द्रेण** साहिप्रसादयोगाद्, **योधपुराधीशतां** योधपुरैश्वर्यम्, समासाद्य प्राप्य, कल्याणमल्लराजो गवाक्षे योधपुरवातायने, पुरा सकलकृत्यकरणात् पूर्वं न्यस्तः स्थापितः ॥ २७७

**महामात्य ! कृतं साधु त्वया सन्धाप्रपूरणात् ।**
**कल्याणभूपतिस्तत्र स्थित इत्यब्रवीदहो ! ॥ २७८**

**व्याख्या**—कल्याणभूपतिस्तत्र **योधपुर**गवाक्षे स्थितो निषण्ण इत्यब्रवीत् उवाच । इतीति किम् ? अहो ! इति विस्मये, हे महामात्य ! श्री**कर्मचन्द्र** ! त्वया सन्धाप्रपूरणात्—श्रीविक्रमप्रतिज्ञानिष्ठापनात्, साधु चारु कृतम् ॥ २७८

**वाञ्छितं वद यद्देयं तवेत्युक्तवति प्रभौ ।**
**मन्त्रीशो धर्ममर्मज्ञो वदति स्म कृताञ्जलिः ॥ २७९**

**व्याख्या**—हे मन्त्रिन् ! यत्तव देयं ग्रामादि वाञ्छितमिष्टं तत् त्वं वद ब्रूहीति प्रभौ कल्याणमल्लनृपे, उक्तवति कथितवति सति, धर्ममर्म धर्मरहस्यं जानातीति धर्ममर्मज्ञो मन्त्रीशः श्री**कर्मचन्द्रः** कृताञ्जली रचिताञ्जलिः, वक्ष्यमाणं वदति स्म अब्रवीत् ॥ २७९

**त्वत्प्रसादान्ममास्त्येव समस्तमपि कामितम् ।**
**तथापि नाथ ! नाथामि धर्मकृत्यमिति प्रभुम् ॥ २८०**

**व्याख्या**—हे राजन् ! त्वत्प्रसादान्मम समस्तमपि कामितं वाञ्छितं ग्रामाश्वाद्यस्त्येव, तथापि हे नाथ ! स्वामिन् ! प्रभुं त्वां प्रतीति वक्ष्यमाणं नाथामि अभ्यर्थये । अभ्यर्थयते नाथति वृणोति वरयतीत्याद्येकार्थाः ॥ २८०

**चाक्रिकाः कुम्भकाराश्च तथा कान्दविका अपि ।**
**वर्षासु चतुरो मासान् स्वदेशे सन्तु निष्क्रियाः ॥ २८१**

**व्याख्या**—हे राजन् ! चाक्रिकास्तिलन्तुदाः, कुम्भकाराः कुलालाः, कान्दविका भक्ष्यकाराः, एते सर्वेऽपि वर्षासु प्रावृषि, चतुरो मासान् यावत्, स्वदेश आत्मीयनीवृति, निष्क्रियाः स्व-स्वतिलपीडनादिकर्मव्यावृत्ताः सन्तु । यथा ते चाक्रिकादयः स्वकर्म वर्षासु कर्तुं न लभन्ते तथा आदेष्टव्यमिति भावः ॥ २८१

**अदेयो राजदेयोंऽशो मालाख्यो वणिजां पुरे ।**
**तथा शुल्केऽपि तुर्योंऽश एडकादिकरोऽपरः ॥ २८२**

**व्याख्या**—हे राजन् ! वणिजां वाणिजानां पुरे नगरे, मालाख्यो राजदेयः अंशो विभागो न आदेयो ग्राह्यः, तथा शुल्केऽपि तुर्यस्तुरीयः अंशो न आदेयः । शुल्कं घट्टादिदेयम् । तथाऽपरोऽन्य एडका उरभ्रास्त आदौ येषामजादीनां त एडकादयस्तेषां करो राजग्राह्यो भागः सोऽपि न आदेयः ॥ २८२

**एवमेवमिति प्रोक्तवाक्याङ्गीकारसूचकम् ।**
**वाक्यं भूपः प्रपद्याभूद् वाञ्छितार्थविधायकः ॥ २८३**

**व्याख्या**—भूपः श्री**कल्याणमल्लः**, प्रोक्तं मन्त्रिणा कथितम्, यद्वाक्यं करमोक्षणादिवचनं तस्य योऽङ्गीकारः स्वीकारः, तत्सूचकं तत्पिशुनं प्रोक्तवाक्याङ्गीकारसूचकं एवमेवमिति वाक्यम्, प्रपद्य स्वीकृत्य, वाञ्छितार्थस्य कामितार्थस्य विधायकः कर्ताऽभूत् । एवमेवमिति राभस्ये ( रभसो हर्षः ) द्विरुक्तिः । प्रश्नावधारणार्थ एवमिति । 'एवमुपमानोपदेशप्रश्नावधारणप्रतिज्ञानेषु' ॥ २८३

**दत्तमेतन्मयाऽमात्य ! याचितं त्वमतः परम् ।**
**अयाचितमिदं प्रीतिप्रदेयं स्वीकुरु स्वतः ॥ २८४**

**व्याख्या**—हे अमात्य ! मन्त्रिन् ! एतत् पूर्वोक्तं मया याचितमभ्यर्थितं दत्तम् । अतः परमेतन्मार्गितदानादूर्ध्वम्, स्वतः स्वयमिदं वक्ष्यमाणम्, प्रीत्या प्रमोदेन, देयं वितरणीयम्, अयाचितं त्वया स्वमुखेनामार्गितं स्वीकुर्वङ्गीकुरु ॥ २८४

तदेवाह – **मदीया सन्ततिर्यावदास्ते च तव सन्ततिः ।**
**मत्साम्राज्ये चतुर्ग्रामी भवत्सन्ततिसात्कृता ॥ २८५**

**व्याख्या** – हे अमात्य ! ममेयं मदीया, सन्ततिः सन्तानः पुत्रपौत्रादिः, यावदिति कालावधौ यावत्कालमास्ते विद्यते; च पुनः तव सन्ततिर्यावदास्ते, तावत् मत्साम्राज्ये मदीयराज्ये, चतुर्णां ग्रामाणां समाहारश्चतुर्ग्रामी, भवत्सन्ततिसात्कृता त्वत्सन्ततेरधीना कृता । यो हि मदीये सन्ताने भविष्यति नृपस्तेन त्वत्सन्ततिसमुद्भवस्य मन्त्रिणश्चत्वारो ग्रामा अवश्यं देया अन्येषां च नियम इति । 'सन्ततिस्तु तनये दुहितर्यपि परम्पराभवे पङ्क्तौ' इत्य**नेकार्थः** । भवत्सन्ततिसादिति 'तदधीनवचने' इति तदधीनत्वार्थे सातिः स्यात् । 'सम्पदा कृञ्वस्तिभिर्योगे' इति ॥ २८५

**नाममुद्राङ्कितं पत्रं विधाय लिविगोचरम् ।**
**धात्रीधवेन भावेन सचिवाय ददे तदा ॥ २८६**

**व्याख्या** – तदा तस्मिन्नवसरे, धात्रीधवेन, **श्रीकल्याणमल्लेन**, नामाङ्किता मुद्रा ऊर्मिका नाममुद्रा, तयाऽङ्कितं चिह्नितं नाममुद्राङ्कितं पत्रम्, लिविगोचरं विधाय लिखित्वेत्यर्थः । भावेन स्वाभिप्रायेण, न तु बलात्कारेण, सचिवाय **श्रीकर्मचन्द्राय**, ददे अदायि ।

–'भावोऽभिप्रायवस्तुनोः । स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु ॥
चेष्टा-योन्योर्बुधे जन्तौ शृङ्गारादेश्च कारणे । शब्दप्रवृत्तिहेतौ च ·········' इत्य**नेकार्थः** ॥ २८६

**अन्यदा मीरजाख्याभृत् स्वामिद्रोही समागतः ।**
**इब्राह्मनामको नागपुरासन्नस्वसीमनि ॥ २८७**
**दिल्लीराज्यमुपादित्सुः श्रुत्वेति स्वचराननात् ।**
**सेनां सन्नह्य मन्त्रीशो रायसिंहनृपानुगः ॥ २८८**
**तं जित्वा वाहिनीं हत्वा वैरिणां रणकर्मणा ।**
**जयमासादयामास साहस्येकशिरोमणिः ॥ २८९** – त्रिभिर्विशेषकम् ।

**व्याख्या** – अन्यदा अन्यस्मिन्नवसरे मन्त्रीशः, स्वामिने साहये द्रुह्यतीत्येवंशीलः स्वामिद्रोही, मीरजेत्याख्यामाख्यातिं बिभर्तीति मीरजाख्याभृद् इब्राह्मनामको 'मीरजा इब्राह्म' इतिनामा, **नागपुरस्य** आसन्ने समीपे, या स्वसीमा निजग्रामान्तस्तस्यां नागपुरासन्नस्वसीमनि, **दिल्ल्या योगिनीपुरस्य** राज्यं साम्राज्यं दिल्लीराज्यम्, उपादित्सुर्जिघृक्षुः, समागतः समाययौ – इति स्वचराननात् आत्मीयस्पशमुखात्, श्रुत्वा निशम्य, सेनां सैन्यं सन्नह्य सज्जीकृत्य, **रायसिंहनृ**पमनुगच्छतीति रायसिंहनृपानुगो रायसिंहराजानुगामी सन्, तं इब्राह्मं जित्वा विजित्य, तथा रणकर्मणा सङ्ग्रामकृत्येन, वैरिणां शत्रूणां वाहिनीं सेनाम्, हत्वा मारयित्वा, जयं विजयमासादयामास आसेदिवान् प्रापेत्यर्थः । किम्भूतो मन्त्रीशः ? साहसं दुष्करकर्म विद्यते येषां ते साहसिनस्तेषां शिरस्येकोऽद्वितीयः शिरोमणिश्चूडामणिरिव साहस्येकशिरोमणिः, शाकपार्थिवादित्वान्मध्यपदलोपी समासः, महासाहसिक इत्यर्थः ॥ २८७–२८८–२८९

**अन्यदा साहिना सार्धं गौर्जरावनियायिना ।**
**गतस्य रायसिंहस्यानुगेन मनना(?)धिना ॥ २९०**
**महम्मदहुसेनाख्यः ख्यातो यो मीरजाख्यया ।**
**निर्जित्य स्वामिसान्निध्यात् किमशक्यं महात्मनाम् ॥ २९१** – युग्मम् ।

**व्याख्या** – अन्यदा अन्यस्मिन् काले, गौर्जरावनिं **गौर्जरदेशभूमिं** यातीति गौर्जरावनियायी तेन गौर्जरं प्रति गच्छतेत्यर्थः । 'नन्दिग्रहपचादिभ्यो ल्युणिन्यच' इति ग्रहादेर्णिनिः । साहिना सार्धं समं गतस्य रायसिंहस्य नृपस्य, अनु

पश्चाद्गच्छतीत्यनुगस्तेन अनुगेन अनुगामिना येन, मननं विमर्शस्तस्याब्धिः सागरो मननाब्धिः तेन विमृश्य, कृत्यकारिणा मन्त्रिराजेन, यो **मीरजा**ख्यया मीरजेत्याख्यात्या **महम्मदहुसेना**ख्यो महम्मदहुसेन इतिनामा ख्यातः प्रथितः, स स्वामि-सान्निध्याद्राजश्री**राजसिंह**सन्निधानाद् राजसिंहसाहाय्यादित्यर्थः, निर्जितः पराभूतः । यतो महात्मनां महाशयानां किमशक्यं किमसाध्यम्? ते हि यत्कर्तुमीहन्ते तद्वेलयैव साधयन्तीति ॥ २९०–२९१

**साधिता येन सन्धानविग्रहादिविधिज्ञया ।**
**प्रज्ञया सोजतिस्थानसमीयानादिनीवृतः ॥ २९२**

**व्याख्या**–येन श्रीमन्त्रिराजेन, सन्धानं सन्धिरेकत्वम्, विरुद्धं ग्रहणं स्वस्थानात् परमण्डले दाहविलोपादि विग्रहो तावादौ येषां यानासनद्वैधाश्रयाणां ते सन्धानविग्रहादयः, तेषां यो विधिर्विधानं तं जानातीति सन्धानविग्रहादिविधिज्ञा तया प्रज्ञया बुद्ध्या, **सोझतिस्थानसमीयाना**दिनीवृतः सोझति-समीयानाप्रमुखदेशाः साधिताः स्ववशे नीताः । तत्र यानं यातव्यं प्रति यात्रा, आसनं विग्रहादिनिवृत्तिः, द्वैधमेकेन सन्धायान्यत्र यात्रेत्यर्थः । अशक्त्या बलवदाश्रयणमाश्रयः संश्रयाख्यः ॥ २९२

**यो जावालपुरं गत्वा तदधीशं वशंवदम् ।**
**विधाय सिंहपादाब्जे निधायार्बुदमाददे ॥ २९३**

**व्याख्या**–यः श्रीकर्मचन्द्रमन्त्री, **जावालपुरं सौवर्णगिरिं** गत्वा, तस्य जावालपुरस्य अधीशं स्वामिनं तदधीशं, वशंवदं वशवर्तिनं विधाय कृत्वा, सिंहपादाब्जे श्री**राजसिंह**चरणकमले निधाय संस्थाप्य, अर्बुदम**र्बुदाचल**माददे जग्राह । जावालेशं पुरस्सरीकृत्य श्रीराजसिंहसिंहसाहाय्यात् श्रीअर्बुदाचलगजराजमारुरोह श्रीमन्त्रिराज इति भावः । वशंवदमिति 'प्रियवशे वदः खच्' इति खच् खित्वान्मुमागमः ॥ २९३

**मुद्गलसैन्याक्रान्तेऽर्बुदाचले येन साहिवचनेन ।**
**विहिता सुतीर्थरक्षा चैत्यानां रक्षणादेव ॥ २९४**

**व्याख्या**–येन श्रीमन्त्रिराजेन, मुद्गलसैन्येन यवनसेनया आक्रान्त आश्रिते अध्यासिते मुद्गलसैन्याक्रान्ते **अर्बुदाचले,** साहिवचनेन श्री**अकबर**पातसाहिफुरमाणेन, चैत्यानां **विमलदण्ड**नायकादिनिर्मापितविहाराणाम्, रक्षणादेव अभङ्गवृत्त्या व्यवस्थापनादेव, सुतीर्थरक्षा शोभनपुण्यक्षेत्रपालना विहिता ॥ २९४

**तद्देशागतबन्दीजनमपि जैनेन्द्रवाक्यमुपजीव्य ।**
**वस्त्रान्नपानदानाज्जीवितवान्नीतवान् स्वगृहान् ॥ २९५**

**व्याख्या**–यो मन्त्री जैनेन्द्रस्तीर्थकृत्तस्य वाक्यमागममुपजीव्य आस्वाद्य, आगमवचनं श्रुत्वेत्यर्थः । तद्देशात् **शिव-पुरी**विषयादागतो यो बन्दीजनस्तमपि, वस्त्रान्नपानदानाद् वसनाशनपानवितरणाज्जीवितवान् जीवयति स्म । तथा स्वगृहा-नात्मीयमन्दिराणि नीतवान् प्रापयत् ॥ २९५

**सर्वेऽपि काकनाशं नेशुः पिशुना अनल्पमत्सरिणः ।**
**यस्याधिकप्रतापात् तमो यथा तापनान्नैशम् ॥ २९६**

**व्याख्या**–यस्य श्री**कर्मचन्द्र**स्य, अधिकप्रतापादतिशायितेजस्सकाशात्, सर्वेऽपि पिशुना द्विजिह्वाः, काकनाशं नेशुः काका इव अनश्यन्नित्यर्थः । 'उपमाने कर्मणि च' इति येन कर्म कर्ता वोपमीयते तत्रोपपदे णमुल् स्यात् । कस्मात् किमिव? तापनाद् रवेर्नैशं निशाभवं तम इव ध्वान्तमिव । यथा रवेरुदयान्निशातमो नश्यति तथा तत्तेजसा पिशुना नेशुरिति भावः । किम्भूताः पिशुनाः? अनल्पा बहवश्च ते मत्सरिणश्च अनल्पमत्सरिणः । मत्सरिण इत्यतिशायने मत्वर्थीयविधानात् सातिशयासहनताशालिनः ॥ २९६

**यत्नकृते निजपुण्यप्रासादे यश्चकार सुविवेकी ।**
**अर्बुदतीर्थावनतः सकलशदण्डं ध्वजारोपम् ॥ २९७**

**व्याख्या**–यः सुविवेकी सुष्ठु विवेकवान् श्रीकर्मचन्द्रः, यत्नस्तीर्थयात्रादिकरणप्रयत्नस्तेन कृतो निष्पादितो यत्नकृतस्तस्मिन् यत्नकृते, निजपुण्यप्रासादे स्वसुकृतदेवगृहे, अर्बुदतीर्थस्य मुद्गलकृतोपद्रवाद् यदवनं रक्षणमर्बुदतीर्थावनं तस्मात् । पञ्चम्यास्तसिल् । कलशश्च सौवर्णः कुम्भः, दण्डश्च सौवर्ण एव ताभ्यां सहितं सकलशदण्डं ध्वजारोपं पताकान्यासं चकार । प्रासादस्तदैव पूर्णो जातः कथ्यते यदा तत्रोपरि कलशदण्डध्वजानामारोपः कृतः स्यात् । तथाऽनेन श्रीमन्त्रिणा यत्नकृतः पुण्यप्रासादोऽर्बुदतीर्थरक्षणात् कलशदण्डध्वजमण्डितः कृत इति मन्यामहे ॥ २९७

**राष्ट्रकूटकुलोत्तंसराजसिंहप्रसादतः ।**
**मोचिता येन लोकानां बन्दी च समियानके ॥ २९८**

**व्याख्या**–येन श्रीकर्मचन्द्रमन्त्रिणा, राष्ट्रकूटकुले राष्ट्रकूटान्वय उत्तंस इव शेखर इव यो राष्ट्रकूटकुलोत्तंस एवंविधो यो **राजसिंह**स्तस्य प्रसादतोऽनुग्रहात्, **समियानके** बन्दी च मोचिता । सैनिककराद् विमोच्य स्वस्थानं नीतेत्यर्थः । हठाकृष्टा स्त्रीर्बन्दी बलवतो हस्ते क्षिप्तो राजपुत्रादिश्च ॥ २९८

**आ त्रयोदशमासं यः पञ्चत्रिंशेऽथ वत्सरे ।**
**पवित्रं सत्रमारेभे दुर्भिक्षे सार्वदेशिके ॥ २९९**

**व्याख्या**–यः श्रीकर्मचन्द्रः, अथेति मङ्गलार्थः । विक्रमतः शरदां षोडशसु शतेषु व्यतीतेषु सप्तदशशतसम्बन्धिनि पञ्चत्रिंशे वत्सरे वर्षे, आ त्रयोदशमासं त्रयोदशमासान् आ मर्यादीकृत्य आ त्रयोदशमासम् । 'आङ्मर्यादाभिविध्योः' इत्याङ् सीमाद्यर्थः । पञ्चम्या समस्यते वा, स प्राक्संज्ञः । आमुक्तिसंसार आमुक्तेरितिवत् । 'आङ् मर्यादावचन' इत्याङ् कर्मप्रवचनीयः । पवित्रं पावनं सत्रं सदादानम्, सार्वदेशिके सर्वदेशे भवं सार्वदेशिकम् । 'अध्यात्मादेष्ठञिष्यते' । तस्मिन् सार्वदेशिके दुर्भिक्षे दुष्काले आरेभे आरब्धम् । पञ्चत्रिंश इति 'तस्य पूरणे डट्' इति षष्ठ्यन्तात् संख्यावाचिनः पूरणेऽर्थे डट् स्यात् । पञ्चत्रिंशतां पूरणः पञ्चत्रिंश इति ॥ २९९

**रोगग्रस्ताबलक्षीणजनानां यः कृपानिधिः ।**
**पथ्यौषधप्रदानं च निर्ममस्तत्र निर्ममौ ॥ ३००**

**व्याख्या**–च पुनः, यः कृपानिधिः करुणानिधानं श्रीकर्मचन्द्रः, तत्र सत्रशालायाम्, ममेति आत्मसम्बन्धेऽव्ययम्, निर्गता ममेति बुद्धिरस्मादसौ निर्ममः, द्रव्ये निःस्पृह इत्यर्थः । एवंविधः सन्, रोगेण आमयेन ग्रस्ताः पीडिताः, अबलाः शरीरादिसामर्थ्यरहिताः, क्षीणा राजयक्ष्मादिना क्षयं प्राप्ता ये जना लोकाः, तेषां पथ्यं हितं यदौषधं भेषजम्, यद्वा पथ्यमौषधभेदः पथ्यं चौषधं च पथ्यौषधे तस्य तयोर्वा यद्दानं तन्निर्ममौ व्यधात् । पथोऽनपेतं पथ्यं 'हृद्यपद्य–'इति साधुः ॥ ३००

**अतिसारामयग्रस्तांस्त्रस्तान् कूरकरम्भकैः ।**
**प्रीणयामास पुण्यात्मा सत्रशालासु मानवान् ॥ ३०१**

**व्याख्या**–यो मानवान्–मानश्चित्तोन्नतिस्तद्वान् श्रीकर्मचन्द्रः, सत्रशालासु त्रस्तान् रोगभयविह्वलान् अतिसारामयेन रोगविशेषेण ग्रस्तान् पीडितान् जनान्, कूरं भक्तं करम्भकाश्च दध्युपसिक्ताः सक्तवस्तैः कृत्वा प्रीणयामास तोषयामास । निरामयानकरोदित्यर्थः । किम्भूतो मन्त्री ? पुण्यात्मा पवित्रात्मा, व्यथितनिर्व्यथीकरणे पुण्यात्मत्वमेव हेतुः । यो हि पुण्यात्मा भवति स एव किल कृपया सरुजः पथ्यादिना नीरुजः करोति ॥ ३०१

**न सा ज्ञातिर्न सा जातिर्न तद्गोत्रं न तत्कुलम् ।**
**नावष्टब्धो ह्यमात्येन यत्र जातो नरव्रजः ॥ ३०२**

**व्याख्या**–सा ज्ञातिः स्वजनो न, सा जातिर्ब्राह्मणादिर्न, तद्गोत्रमन्वयो न, तत्कुलमुग्रादि न, यत्र ज्ञात्यादौ जातः

उत्पन्नः नरव्रजो मनुष्यसमूहः, अमात्येन श्रीकर्मचन्द्रेण, न अवष्टब्धः स्वमर्यादातः पतन्न हस्ते धारितः । एतावता सर्वेऽपि ज्ञातिजात्याद्युत्पन्ना नरा अनेन द्रविणव्ययेन पालिता इत्यर्थः ॥ ३०२

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति चतुष्टयीम् ।**
**वर्णानां रक्षताऽनेन निश्चिन्तो विहितो विधिः ॥ ३०३**

**व्याख्या**—अनेन श्रीकर्मचन्द्रेण मन्त्रिणा, ब्राह्मणा द्विजाः, क्षत्रिया राजन्याः, वैश्या वाणिज्यादिवृत्तिभाजः, शूद्राश्च पजाः—इति वर्णानां चतुष्टयीं रक्षता पालयता सता, विधिर्ब्रह्मा, निश्चिन्तः—चिन्ता असद्विकल्पः, निर्गता चिन्ता अस्मादिति निश्चिन्तो विहितः कृतः । चिन्ता न काऽप्यस्तीति भावः । तस्यास्तदरक्षणाद् विनाशे पुनः सृष्टिकरणप्रयासचिन्ता तस्य भवेदिति भावः ॥ ३०३

**कारवः पामरा म्लेच्छाः कदर्या मानवा नवाः ।**
**तोषं प्रापुः समायाताः सत्रागारेऽस्य मन्त्रिणः ॥ ३०४**

**व्याख्या**—कारवः शिल्पिनः, प्रामराः पामराः, म्लेच्छाः शबरादयः, कदर्या दृढमुष्टयः, नवाः परदेशीयाः, मानवा मनुष्याः, अस्य मन्त्रिणः श्रीकर्मचन्द्रस्य सत्रागारे समायातास्तोषं तुष्टिं प्रापुः ॥ ३०४

**साधर्मिकवणिग्लोकवर्गाय समकं ददौ ।**
**कुटुम्बसंख्यया पूर्वं वार्षिकं वार्षिकं व्ययम् ॥ ३०५**

**व्याख्या**—यो मन्त्री साधर्मिकाः सधर्माणः, वणिग्लोकाश्च वणिजजनास्तेषां यो वर्गो जातीयसमूहस्तस्मै साधर्मिकवणिग्लोकवर्गाय, समकं युगपत्, कुटुम्बसंख्यया कुटुम्बेयत्तया, पूर्वं पुरा, वार्षिकं वार्षिकं व्ययं द्रव्योत्सर्गं ददौ । वर्षे भवो वार्षिकः । एतावदेतावदस्य कुटुम्बे लगिष्यतीति विमृश्य पूर्वमेव वर्षभोग्यमन्नादि तत्कुटुम्बस्थजनगणनया दत्तवानित्यर्थः । वर्गस्तु सदृशां सदृशां सजातीयानां प्राणिनां वृन्दं वर्गो यथा ब्राह्मणवर्ग इत्यादि ॥ ३०५

**त्रयोदशसु मासेषु व्यतीतेषु पुनर्मुदा ।**
**पाथेयं धीसखो दत्त्वा प्रापयत् तान् स्वमण्डलम् ॥ ३०६**

**व्याख्या**—धीसखः श्रीकर्मचन्द्रमन्त्री, सत्रारम्भदिनात् त्रयोदशसु मासेषु व्यतीतेषु गतेषु सत्सु, मुदा हर्षेण, पुनर्भूयः, तान् समागतजनान्; पाथेयं शम्बलं दत्त्वा, स्वमण्डलं निजदेशं प्रापयन्नीतवान् ॥ ३०६

**मुद्गलतुरसमखानो विलुण्टयन् सारशिवपुरीविषयम् ।**
**समधिकसहस्रमानाः प्रतिमा जग्राह या जैनीः ॥ ३०७**
**साहिद्वारे प्राप्तास्ताः संवीक्ष्य प्रमोदमेदस्वी ।**
**मन्त्रीशो मोचितवान् भक्त्या दीनारदानेन ॥ ३०८—युग्मम् ।**

**व्याख्या**—मुद्गलतुरसमखानः, सारशिवपुरीविषयं प्रधानशिवपुरीदेशम्, विलुण्टयंश्चोरयन् सन्, या जैनीर्जिनानामिमा जैन्यस्ताः, समधिकसहस्रमानाः कियतीभिरधिकाः सहस्रसंख्याः, प्रतिमाः प्रतिकृतीर्जग्राह । ताः प्रतिमाः साहिद्वारे संवीक्ष्य दृष्ट्वा, प्रमोदेन हर्षेण, मेदस्वी उपचितः—प्रमोदमेदस्वी, एवंविधः सन्, मन्त्रीशः श्रीकर्मचन्द्रः, भक्त्या जिनेन्द्राणामुपरि परमानुरागेण, दीनारदानेन सौवर्णनाणकवितरणेन, मोचितवान् तत्कराद् दूरीचकार । विक्रमपुरे ताः पूज्यमानाः सम्प्रत्यपि सन्ति । लुण्टव्यवज्ञाचौर्ये, किं लुण्टयति ॥ ३०७–३०८

**तथौकेशे पुरा वंशे विना सारङ्गसन्ततिम् ।**
**नार्यः परिदधुर्नैव सौवर्णाभरणं पदोः ॥ ३०९**

**व्याख्या**—तथेति समुच्चये, पुनर्मन्त्रिकृत्यं समुच्चयन्नाह—तथा ऊकेशे वंशे, पुरा सारङ्गसन्ततिं साधुसारङ्गसन्तानं विना नार्यः अन्यस्त्रियः, पदोश्चरणयोः, सौवर्णाभरणं हैमालङ्कारम्, नैव परिदधुः परिदधति स्म । साधुसारङ्गसन्ताने याः स्त्रियो भवन्ति ता एव सौवर्णाभरणं चरणयोः परिदधति नान्या इति साहिसेवया तेन विरुदः प्राप्त आसीत् ॥ ३०९

साम्प्रतं यदनेन मन्त्रिणा कृतं तदाह –

**साहिना सुप्रसन्नेन यत्स्त्रीणां स्वर्णनूपुरे ।**
**दत्त्वा महत्त्वमत्यर्थमेधितं तस्य भूतले ॥ ३१०**

**व्याख्या** – साहिना कृतां व्यवस्थां साहिरेव अन्यथा कर्तुमलम्भूष्णुरिति; सुप्रसन्नेन मन्त्रिणोपरि प्रसादवता साहिना श्रीअकब्बरेण, यस्य मन्त्रिणः स्त्रीणां योषितां यत्स्त्रीणाम्, स्वर्णनूपुरे हेमतुलाकोटी दत्त्वा, तस्य श्रीकर्मचन्द्रस्य, महत्त्वं महिमा, अत्यर्थमतिशयेन, भूतले भूमण्डल एधितं प्रवर्धितम् ॥ ३१०

**ततः प्रभृति सर्वेषां वत्सराजानुयायिनाम् ।**
**अमात्यानां नितम्बिन्यः पादे स्वर्णं हि पर्यधुः ॥ ३११**

**व्याख्या** – ततः प्रभृति तद्दिनादारभ्य, वत्सराजस्य मन्त्रिणोऽनुयान्तीति वत्सराजानुयायिनस्तेषां वत्सराजवंश्यानाम्, सर्वेषाममात्यानां मन्त्रिणाम्, नितम्बिन्यः स्त्रियः, पादे स्वर्णम्, हि स्फुटम्, पर्यधुः परिदधति स्म ॥ ३११

**तुरसमखानानीतां गौर्जरविषयाश्रितां वणिग्बन्दीम् ।**
**तद्देयद्रविणार्पणविधिना यो मोचयामास ॥ ३१२**

**व्याख्या** – यो मन्त्री, तुरसमखानेन आनीतां ढौकिताम्, गौर्जरविषयाश्रितां गौर्जरदेशाध्यासितां गौर्जरदेशसम्बन्धिनीमित्यर्थः, वणिग्बन्दीम्, तेषां गृहीतगौर्जरवणिजां यद्देयं तुरसमखानस्य दातव्यं द्रविणं द्रव्यं सहस्रलक्षादि, तस्य योऽर्पणविधिर्वितरणविधानम्, तेन तद्देयद्रविणार्पणविधिना, मोचयामास मुत्कलयति स्म ॥ ३१२

**याचकेभ्योऽथ जैनेभ्यः प्रवाहेण समर्पयन् ।**
**वाहाननेकपांश्चापि यः स्वनामाकृताक्षयम् ॥ ३१३**

**व्याख्या** – अथेति समुच्चये, यो मन्त्री, प्रवाहेण लोकव्यवहारेण, जैनेभ्यो जिनपक्षीयेभ्यो याचकेभ्यो वनीपकेभ्यः, वाहान् अश्वान्, अनेकपांश्चापि हस्तिनश्चापि, समर्पयन् ददत् सन्, स्वनाम निजनामधेयमक्षयमव्ययमकृत कृतवान् । 'प्रवाहो व्यवहाराम्बुवेगयोः' इत्यनेकार्थः ॥ ३१३

**शत्रुञ्जये मधूपघ्ने जीर्णोद्धारं चकार यः ।**
**येनैतत्सदृशं पुण्यकारणं नास्ति किञ्चन ॥ ३१४**

**व्याख्या** – यो मन्त्री, शत्रुञ्जये पुण्डरीकाद्रौ, तथा मधूपघ्ने मथुरायाम्, जीर्णोद्धारं जीर्णपतितचैत्यसमारचनं चकार । येन हेतुना, एतत्सदृशं जीर्णोद्धारसदृक्षम्, पुण्यकारकं सुकृतहेतुः, न किञ्चन किञ्चिदस्ति विद्यते । नवीनचैत्यकरणाज्जीर्णोद्धारे त्वष्टगुणं पुण्यम् । यतो –

"नूतनार्हद्गृहावासविधाने यत्फलं भवेत् । तस्मादष्टगुणं पुण्यं जीर्णोद्धारे विवेकिनाम् ॥"

इत्युपदेशतरङ्गिण्याम् । किञ्चनेत्यत्र चनेति चिदर्थे किंवृत्तात् परत एव चास्य प्रयोगो भवति ॥ ३१४

**प्रतिदेशं प्रतिग्रामं प्रतिद्रङ्गं महात्मना ।**
**आ काबिलपुरात् तेने येन लम्भनिका निजा ॥ ३१५**

**व्याख्या** – येन महात्मना महाशयेन श्रीकर्मचन्द्रेण, प्रतिदेशं देशं देशं प्रति प्रतिदेशम्, तथा प्रतिग्रामं सकलग्रामेषु, तथा प्रतिद्रङ्गं प्रतिनगरम्, काबिलपुरं आ मर्यादीकृत्य आ काबिलपुरान्निजा आत्मीया लम्भनिका, तेने विस्तारिता । प्रतिद्रङ्गमिति 'द्रमो णिद्रा' इति द्रमगतावित्यस्माद्गः प्रत्ययो भवति । 'द्रङ्गो नगरम्' औणादिकोऽयम् ॥ ३१५

**अङ्गान्येकादशाऽपि स्राक् श्रुतानि श्रुतधारिणाम् ।**
**गुरूणां सन्निधावर्थसूत्रादिक्रमतोऽमुना ॥ ३१६**

**व्याख्या**—अमुना श्रीकर्मचन्द्रेण मन्त्रिश्रीचन्द्रसहितेन, एकादशाऽप्यङ्गान्याचारादीनि, श्रुतधारिणां श्रुतवताम्, गुरूणां श्रीजयसोमोपाध्यायानाम्, सन्निधौ समीपे, श्रीविक्रमनगरे प्राकारन्तः, अर्थोऽभिधेयस्तीर्थकरप्रणीतः, सूत्रं गणधरकृतम्, ते आदौ येषां निर्युक्त्यादीनां तेऽर्थसूत्रादयस्तेषाम्, क्रमतः परिपाट्या—पूर्वमाचाराङ्गं श्रूयते पश्चात् सूत्रकृताङ्गमित्यादिश्रवणक्रमेण, स्राक् शीघ्रं श्रुतानि । 'द्रागादयः' इति द्राक् इत्यादयः शब्दाः किक्प्रत्ययान्ता निपात्यन्ते । द्रवतेरा च द्राक्, एवं सरतेः स्राक् स एवार्थ इत्युणादौ ॥ ३१६

**श्रुतज्ञानस्य भक्त्यर्थं श्रीसिद्धान्तस्य लेखने ।**
**घनं धनं पुनर्येन पुरा व्यापारितं विदा ॥ ३१७**

**व्याख्या**—विदा विचक्षणेन येन श्रीकर्मचन्द्रेण, श्रुतज्ञानस्य जिनागमस्य, भक्त्यर्थं भक्तिः सेवा तदर्थम्, श्रीसिद्धान्तस्य लेखने—पत्रेषु लेखकेभ्यः अक्षरन्यासीकरणे, घनं बहु धनम्, पुनर्भूयो व्यापारितं नियोजितम् । घनं धनं दत्त्वा यः पुस्तकानि लेखयति स्मेति भावः ॥ ३१७

**शत्रुञ्जयोज्जयन्ताद्र्योः शिखरे जैनमन्दिरम् ।**
**विधापयितुमर्थौघं प्रेषयामास यः सुधीः ॥ ३१८**

**व्याख्या**—यः सुधीः सुबुद्धिर्मन्त्री, शत्रुञ्जयाद्रिश्चोज्जयन्ताद्रिश्च द्वन्द्वान्ते श्रूयमाणो द्रिशब्द उभयत्रापि योज्यते, शत्रुञ्जयोज्जयन्ताद्री तयोः शत्रुञ्जयोज्जयन्ताद्र्योः, शिखरे श्रृङ्गे, जैनमन्दिरं विधापयितुं कारयितुम्, अर्थौघं द्रव्यसमूहम्, प्रेषयामास प्रहिणोति स्म ॥ ३१८

**चतुःपर्वी समग्रोऽपि कारुलोको यदाज्ञया ।**
**पालयामास राजेन्द्रराजसिंहस्य मण्डले ॥ ३१९**

**व्याख्या**—यस्य मन्त्रिणः, आज्ञया आदेशेन, राजेन्द्रराजसिंहस्य मण्डले देशे, समग्रोऽपि समस्तोऽपि, कारुलोकः शिल्पिजनः, चतुःपर्वीमष्टमीचतुर्दशीपूर्णिमामावास्यारूपां पालयामास । अष्टम्यादिपर्वदिवसेषु न कोऽपि कारुः कुम्भपाकादि कर्तुं लभत इत्यर्थः ॥ ३१९

पुनर्धर्मकृत्यान्तरमाह—

**चाक्रिकान् कुम्भकारांश्चारम्भं स्वस्वकुलोद्भवम् ।**
**त्याजयामास वर्षासु शक्त्या युक्त्या च यः कृती ॥ ३२०**

**व्याख्या**—यः कृती सुधीः श्रीकर्मचन्द्रः, शक्त्या स्वसामर्थ्येन, युक्त्या च न्यायेन, वर्षासु प्रावृट्काले, चाक्रिकांस्तैलिकान्, कुम्भकारांश्च कुलालान्, स्वस्वकुलोद्भवमात्मीयात्मीयवंशसम्भवम्, आरम्भं प्राण्युपमर्दम्, त्याजयामास अतित्यजत् । 'युक्तिर्न्याये योजने च' । शक्तिरेवम्—यच्छ्रीराजसिंहराजाज्ञेयं वर्तते यत् केनापि न वर्षासु तिलपीडनादि कर्तव्यमिति । युक्तिश्चेत्थम्—यदत्र वर्षासु भूयांसो जन्तवो भवन्ति तेषां हिंसा साक्षादवलोक्यते तेन भवद्भिरपि पारलौकिकहितार्थिभिर्न स्वकर्म कार्यमिति ॥ ३२०

**छेदनं सर्ववृक्षाणां निखिले मरुमण्डले ।**
**निषिद्धं राजसिंहस्य प्रसादेनैव मन्त्रिणा ॥ ३२१**

**व्याख्या**—मन्त्रिणा श्रीकर्मचन्द्रेणैव, राजसिंहस्य राज्ञः, प्रसादेन अनुग्रहेण, निखिले समस्ते, म्रियन्ते तृषाऽत्र मरुः, मरुनामा मण्डलो देशो मरुमण्डलस्तस्मिन्, सर्ववृक्षाणां शम्यादीनाम्, छेदनं कल्पनम्, निषिद्धं वारितम् ॥ ३२१

**यो राजसिंहराज्ये प्राप्य श्रीसिन्धुमण्डलप्रभुताम् ।**
**सतलंज-डेक-रावीसिन्धुषु मीनावनं विदधे ॥ ३२२**

**व्याख्या**—यः श्रीकर्मचन्द्रः, राजसिंहराज्ये श्रीसिन्धुमण्डलप्रभुतां श्रीसिन्धुदेशैश्वर्यम्, प्राप्य अधिगम्य, सतलंज-डेक-रावीसिन्धुषु सतलंज-डेक-रावीनदीषु तिसृषु, मीनावनं मत्स्यरक्षणम्, विदधे चकार ॥ ३२२

**राजसिंहं समभ्यर्थ्य चतुरङ्गचमूयुजा ।**
**हडफास्थानसंस्थायिबलोचानभिजग्मुषा ॥ ३२३**
**बलोचानां बलोचानां वाहिनी रणगाहिनी ।**
**तर्जिता च जिता येन कृता धनिकवर्जिता ॥ ३२४ –युग्मम् ।**

**व्याख्या**—येन श्रीकर्मचन्द्रेण, **बलोचानां** म्लेच्छविशेषाणाम्, वाहिनी सेना, तर्जिता भर्त्सिता । तर्जङ्क तर्ज भर्त्सने । च पुनः, जिता पराभूता । तथा धनिकेन स्वामिना, वर्जिता रहिता धनिकवर्जिता कृता । किम्भूतानां बलोचानाम्? बलेन सैन्येन सामर्थ्येन चोचास्तुङ्गा अतिशायिनो बलोचास्तेषां बलोचानाम्; किम्भूता वाहिनी? रणं सङ्ग्रामं गाहते विलोडयतीत्येवंशीला रणगाहिनी; किम्भूतेन येन? राजसिंहं समभ्यर्थ्य आग्रहेण याचित्वा, चत्वार्यङ्गानि गजवाजिरथपत्तिलक्षणानि विद्यन्ते यस्याः सा चतुरङ्गा एवंविधा या चमूः सेना, तां युनक्तीति चतुरङ्गचमूयुक्तेन चतुरङ्गचमूयुजा, राजसिंहकथनेन चतुरङ्गचमूसहितेनेत्यर्थः । पुनः किम्भूतेन? **हडफा**स्थाने संस्थायिनो ये बलोचास्तानभि अभिमुखं हन्तुं जग्मुषा गतेन ॥ ३२३–३२४

**स किंप्रभुर्यमाश्रित्य सेवको नाभिनन्दति ।**
**स सेवकोऽपि किं योऽर्थं स्वामिनो नैव साधयेत् ॥ ३२५**

**व्याख्या**—स किमिति प्रश्ने प्रभुः स किंप्रभुः, कुत्सितः प्रभुरित्यर्थः । यं प्रभुमाश्रित्य अङ्गीकृत्य, सेवको भक्तलोकः, नाभिनन्दति न समृद्धिमाप्नोति; तथा स सेवकोऽपि किमिति प्रश्नः स सेवकोऽपि कुत्सित इत्यर्थः, यः सेवकः स्वामिनः प्रभोरर्थं कार्यं वैरिहननादि नैव साधयेन्निष्पादयेत् । 'किं क्षेप-निन्दयोः प्रश्ने वितर्के' इत्यनेकार्थः । यतः–

'स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥ १ ॥' इति **भारविः** ॥ ३२५

**या बन्दी निजसैन्ये समागता वैरिविषयसम्भूता ।**
**वस्त्रान्नदानपूर्वं सा नीता येन निजगेहे ॥ ३२६**

**व्याख्या**—या बन्दी हठाकृष्टा स्त्री, बलवतो हस्ते क्षिप्तो राजपुत्रादिश्च, निजसैन्य आत्मीयकटके, वैरिविषयसम्भूता शत्रुदेशसम्बन्धिनीत्यर्थः, समागता आयाता सा बन्दी, वस्त्रान्नदानपूर्वं वसनाशनवितरणपुरस्सरम्, येन **श्रीकर्मचन्द्रेण** निजगेहे स्वसदने, नीता प्रापिता ॥ ३२६

**कारयामास चैत्येषु स्नात्रं यः प्रतिवासरम् ।**
**स्वदेशे द्रव्यदानेन शौल्कशालिकलोकतः ॥ ३२७**

**व्याख्या**—यः श्रीमन्त्रिराट्, प्रतिवासरं प्रतिदिनम्, स्वदेशे आत्मीयमण्डले, शुल्कशालायां नियुक्तः शौल्कशालिक एवंविधो यो लोको जनस्तस्माद्, द्रव्यदानेन अर्चोचितद्रविणवितरणेन, चैत्येषु जैनविहारेषु, स्नात्रं कारयामास अचीकरत् ॥ ३२७

**स्तूपं श्रीजिनदत्तस्य कुशलस्य गुरोरपि ।**
**अचीकरद् गुरुप्रीत्या फलवर्धिपुरीस्थितः ॥ ३२८**

**व्याख्या**—य इति गम्यते यः **श्रीकर्मचन्द्रः**, फलवर्धिपुरीस्थितः **फलवर्धिका**पुरस्थितः सन्, श्रीजिनदत्तस्य **श्रीजिनदत्तसूरेः**, कुशलस्य गुरोरपि श्रीजिनकुशलसूरेरपि, गुरोरुपरि या प्रीतिरानन्दः, यद्वा गुर्वी गरिष्ठा या प्रीतिस्तया गुरुप्रीत्या, स्तूपमचीकरत् कारयामास । 'स्तुवो दीर्घश्च' ष्टुञतः पो धातोर्दीर्घश्च । 'स्तूपो भूमिसमुच्छ्रयः' प्रक्रियोणादौ ॥ ३२८

वृक्षरक्षणसञ्जातपुण्यप्राग्भारतः किमु ? ।
दुर्भिक्षतर्पितानेकलोकाशीर्भिरथो किमु ? ॥ ३२९
यस्य पुत्रौ शुभाकारौ सञ्जातौ स्त्रीयुगाङ्गजौ ।
साहिदत्ताभिधानौ द्वौ नासिक्याविव सुन्दरौ ॥ ३३० -युग्मम् ।

व्याख्या - यस्य श्रीकर्मचन्द्रस्य, स्त्रियोर्युगं द्वन्द्वं स्त्रीयुगम्, जीवादे-अजायबदेनामकम्, तस्य अङ्गाज्जातौ स्त्रीयुगाङ्गजौ, सञ्जातावुत्पन्नौ । तत्र किमु इति वितर्केऽव्ययम् । किमु किं वृक्षाणां शम्यादीनां मरुदेशे यद्रक्षणमच्छेदनं तस्मात् सञ्जात उत्पन्नो यः पुण्यप्राग्भारः सुकृतसामस्त्यं तस्माद् वृक्षरक्षणसञ्जातपुण्यप्राग्भारतः । अथो इति प्रश्ने । किमु दुर्भिक्षे पञ्चत्रिंशवर्षीयदुष्काले तर्पितास्तृप्तिं प्रापिताः प्रीणिता इति यावद्, येऽनेके बहवो लोका भिक्षाकजनास्तेषां या आशिषो मङ्गलशंसनानि ताभिः, सञ्जातावित्युभयत्रापि योज्यते । वृक्षरक्षणपुण्यादिमौ सञ्जातौ । यद्वा दुर्भिक्षरक्षितभिक्षुकोक्ताशिषा वा सञ्जाताविति समुदायार्थः । किम्भूतौ पुत्रौ ? शुभः शोभन आकार आकृतिर्ययोस्तौ शुभाकारौ । पुनः किम्भूतौ ? साहिना श्रीअकबरेण दत्तमभिधानं ययोस्तौ साहिदत्ताभिधानौ । अन्यदा श्रीमन्त्रिराजेन साहेः पुरो ढौकनं ढौकितम् । साहिना किमर्थमिदमुपदीकृतं त्वया सुकृतिनेत्युक्ते मन्त्र्याह - श्रीसाहिशुभदृष्ट्या दिष्ट्या मम पुत्रौ सञ्जातौ स्तः । ततः साहिना स्वमुखेन तयोरभिधा अभिदधे । तामेव पुरतो वक्ष्यति ग्रन्थकारः । पुनः किम्भूतौ ? नासिक्याविव अश्विनीसुताविव सुन्दरौ रम्यौ । 'तृपण् प्रीणने क्ते' तर्पितं तृपितम् ॥ ३२९-३३०

भाग्यचन्द्रस्तयोराद्यो लक्ष्मीचन्द्रो द्वितीयकः ।
भाग्यं लक्ष्मीश्च यद्व्याजादायाते किं यदोकसि ॥ ३३१

व्याख्या - तयोः पुत्रयोर्मध्य आद्यः प्रथमो भाग्यचन्द्रः, प्रथमं तस्य जातत्वाद् । द्वितीय एव द्वितीयकः स्वार्थे कः, लक्ष्मीचन्द्रः, ययोर्भाग्यचन्द्र-लक्ष्मीचन्द्रयोर्व्याजान्मिषाद् - यद्व्याजात्, यस्य श्रीकर्मचन्द्रस्यौकसि मन्दिरे यदोकसि, किं भाग्यं लक्ष्मीश्च आयाते प्राप्ते ? भाग्यचन्द्र-लक्ष्मीचन्द्रमिषेण मन्ये भाग्यलक्ष्म्यौ यद्गेहे समेते इति ॥ ३३१

एवं धर्मप्रसादेन कर्मचन्द्रः सुसन्ततिः ।
सिंहसम्मानसम्पर्काद् राज्यकार्यकरोऽभवत् ॥ ३३२

व्याख्या - एवममुना प्रकारेण, कर्मचन्द्रो मन्त्री, धर्मप्रसादेन स्वकृतसुकृतानुग्रहेण, सुष्ठु शोभना सन्ततिः सन्तानो यस्य स सुसन्ततिः, सिंहस्य श्रीराजसिंहस्य, यः सम्मानः सत्कारस्तस्य सम्पर्कात् सम्बन्धाद्, राज्यकार्यं करोतीति राज्यकार्यकरोऽभवद् बभूव ॥ ३३२

राजसिंहोऽपि भूभर्ता प्रतापैकदिवाकरः ।
जलालदीर्ददौ यस्य राजेत्याख्यां गुणाधिकाम् ॥ ३३३

व्याख्या - राजसिंहोऽपि भूभर्ता भूपो राजेत्यध्याह्रियते । किम्भूतः ? प्रतापेन तेजसैकोऽद्वितीयो दिवाकर इव सूर्य इव यः स प्रतापैकदिवाकरः । यस्य राजसिंहस्य जलालदीरकबरसाहिर्गुणाधिकां गुणैरतिशायिनीं राजेत्याख्यां नाम ददौ 'रा जा रा ज सिं ह' इत्याख्यातवानिति ॥ ३३३

भूपति-दलपतिनामकसुतौ च जसवन्तदेविजौ यस्य ।
निर्वाणकुलोत्पन्नस्त्रीजातोऽन्यस्तु कचराह्वः ॥ ३३४

व्याख्या - यस्य श्रीराजसिंहराजस्य, जसवन्तदेविजौ जसवन्तदेविकुक्षिसम्भवौ, भूपति-दलपतिनामकौ सुतावभूतामिति गम्यते । अन्यस्तु निर्वाणकुल उत्पन्ना या स्त्री तस्यां जात उत्पन्नो निर्वाणकुलोत्पन्नस्त्रीजातः कचराह्वः कृष्णसिंह इति नाम्ना प्रसिद्धः सुतोऽभूदिति ॥ ३३४

**अकबरजलालदीनप्रसादतोऽनेककोट्टबलकलितः ।**
**मन्त्रिकृतमन्त्रयोगात् पञ्चसहस्त्रीपतिर्जज्ञे ॥ ३३५**

**व्याख्या**—श्रीराजसिंहः अकबरजलालदीनस्य साहेः प्रसादतः अनुग्रहाद्, अनेके बहवो ये कोट्टा दुर्गाणि तैः बलेन च सैन्येन कलितः सहितोऽनेककोट्टबलकलितः, मन्त्रिणः श्रीकर्मचन्द्रस्य यो मन्त्र आलोचस्तस्य योगात् संयोगाद् मन्त्रिमन्त्रप्रभावादित्यर्थः । पञ्चानां सहस्राणामश्ववारसम्बन्धिनां समाहारः पञ्चसहस्री, तस्याः पतिः स्वामी, जज्ञे बभूव । 'पञ्च-हजारी'ति ख्यातिं प्राप्त इत्यर्थः ॥ ३३५

**दैवयोगान्निजेशस्य वैमनस्यमथान्यदा ।**
**ज्ञात्वा मन्त्री निजे चित्ते कलिकालविजृम्भितम् ॥ ३३६**
**आज्ञां राज्ञः समासाद्य समादाय निजं जनम् ।**
**मेदिनीतटमध्यास्त स्वामिधर्मधनाधिकः ॥ ३३७—युग्मम् ।**

**व्याख्या**—अथ अनन्तरम्, अन्यस्मिन् काले, दैवयोगाद् विधिवशात् [ 'शुभाशुभं कर्म दैवम्' इति टिप्पणिः ] निजेशस्यात्मीयप्रभोः **राजसिंहस्य**, कलिकालस्य विजृम्भितं विलसितं वैमनस्यं चित्तकालुष्यं निजे चित्ते ज्ञात्वा, राज्ञः श्रीराजसिंहस्य आज्ञामादेशं समासाद्य प्राप्य, निजं जनं स्वजनवर्गं समादाय गृहीत्वा, **मेदिनीतटं मेडतापुरे-**त्याख्यया ख्यातमध्यास्त अध्यतिष्ठदशिश्रयत् । किम्भूतो मन्त्री ? स्वामिधर्म एव धनं तेन अधिकोऽतिशायी स्वामिधर्म-धनाधिकः ॥ ३३६—३३७

**निर्मलं जलमाचम्य नादेयं पङ्किलं पुनः ।**
**नाऽऽदेयमिति हंसानां ज्ञात्वा नास्थान्नृपान्तिके ॥ ३३८**

**व्याख्या**—हंसानां राजहंसानाम्, निर्मलं विमलम्, नद्यां भवं नादेयं जलमाचम्य पीत्वा, पुनर्विशेषे, विशेषेण पङ्किलं तदेव कर्दमवज्जलम्, न आदेयं न स्वीकार्यं न पातव्यमित्यर्थः । इति ज्ञात्वा मन्त्री नृपान्तिके श्रीराजसिंहसविधे, न अस्थात् तस्थौ । यथा हंसेन येन पुरा निर्मलं जलं पीतं भवति, स पश्चात्तदेव पङ्किलं जलं पातुं नेहते; तथा अयमपि पुरा प्रसन्नं श्रीराजसिंहनृपं सेवित्वा तमेव कलुषमानसं कथं सेवेतेति भावः । यतः—

'क्रुद्धोलूकनखप्रपातविगलत्पक्षा अपि स्वाश्रयं, ये नोज्झन्ति पुरीषपुष्टवपुषस्ते केचिदन्ये द्विजाः ।
ये च स्वच्छतरङ्गिणीबिसलसत्कल्लोलसंवर्धिता, गङ्गानीरमपि त्यजन्ति कलुषं ते राजहंसा वयम् ॥ १ ॥'

पानविधौ—'पिबति—धयति—आचमति—पीयते च रसयति चे'ति **क्रियाकलापे** । नादेयमिति नद्यादिभ्यो ढगिति ढग् भवार्थे ॥ ३३८

**तत्र श्रीपार्श्वनाथस्य फलवर्द्धिपुरेशितुः ।**
**सेवां कर्तुं प्रवृत्तोऽभूज्जिनदत्तगुरोस्तथा ॥ ३३९**

**व्याख्या**—तत्र **मेदिनीतटे**, श्रीकर्मचन्द्रः, श्रीफलवर्धिकपुरस्येशिता नायकः फलवर्धिपुरेशिता तस्य फलवर्धि-पुरेशितुः श्रीपार्श्वनाथस्य, सेवां भक्तिं कर्तुं प्रवृत्तोऽभूत् । तथा जिनदत्तगुरोः **श्रीजिनदत्तसूरेः** सेवां कर्तुं प्रववृते ॥ ३३९

**स्थानस्थानस्थितानेकनरेशाह्वानसूचकैः ।**
**मनोऽस्य चञ्चलं नाभूदायातैस्तज्जनैरपि ॥ ३४०**

**व्याख्या**—अस्य श्रीकर्मचन्द्रस्य, मनश्चित्तम्, स्थाने स्थाने स्थिता अवस्थिता येऽनेके बहवो नरेशा नृपा **मान-सिंहराणाद्याः**, तेषां यदाह्वानमामन्त्रणं तत्सूचकैस्तत्पिशुनैस्तेषां नृपाणां जनैस्तज्जनैरायातैरपि, न चञ्चलं चपलमभूत् । बहुभी राजभिः स्वप्रधानजनप्रेषणद्वारा आकारितोऽप्यसौ न अस्थिरमना आसीत्, न कस्यापि समीपे जगामेत्यर्थः ॥ ३४०

प्रसादात् पार्श्वनाथस्य गुरोश्च कुशलप्रभोः ।
साहेर्जलालदीनस्य श्रुतदृष्टगुणावलेः ॥ ३४१
महाराजाधिराजश्रीराजसिंहनिजप्रभु- ।
प्रेषिताप्तजनोत्कृष्टफुरमानसमन्वितम् ॥ ३४२
समाजगाम सप्रेमप्रसादवचनाद्भुतम् ।
फुरमानं त्वयाऽत्रागन्तव्यमेवेति भाववत् ॥ ३४३ – त्रिभिर्विशेषकम् ।

**व्याख्या** – यस्येत्यध्याह्रियते यस्य श्रीकर्मचन्द्रस्य, पार्श्वनाथस्य प्रसादादनुग्रहात्, च पुनः कुशलप्रभोर्गुरोः प्रसादात्, **जलालदीन**स्य साहेरकबरस्य 'हे मन्त्रिन् ! त्वया अत्र मत्समीप आगन्तव्यमेव' इति भाववदित्यभिप्राययुक्तम्, फुरमानमादेशपत्रम्, समाजगाम । किम्भूतस्य साहेः ? श्रुता – कर्णाभ्यामाकर्णिता, पुरा **राजसिंह**नृपमुखात्, दृष्टा च चक्षुर्भ्यामवलोकिता, गुणावलिर्दाक्ष्यदाक्षिण्यसौजन्योदात्तत्वादिगुणराजिर्येन स श्रुतदृष्टगुणावलिस्तस्य श्रुतदृष्टगुणावलेः । किम्भूतं फुरमानम् ? महाराजाधिराजश्री**राजसिंहा**ख्यो यो निजप्रभुः स्वस्वामी, तेन प्रेषिता मन्त्रिणमाकारयितुं मुक्ता य आप्तजना अविसंवादिवाक्यवक्तारस्तैः सह उत्कृष्टं प्रधानं यत्स्वीयं फुरमानं तेन समन्वितं राजसिंहफुरमानयुतम्, साहिफुरमानमागच्छदित्यर्थः । इह 'समाप्तमिव पूर्वार्धे कुर्यादर्थप्रकाशनम्' इति कविसमयमुल्लङ्घ्य पादचतुष्टयेऽपि संलग्नस्यैव समासस्य करणाद् दोषशङ्का न करणीया । महाकविप्रयोगेषु क्वचित् तथा दर्शनात् । यथा –

'पुरःसुरतसंरम्भरसद्विगुणितच्छवि - पार्वतीवदनालोकलालसः पश्य शङ्करः ॥' इति ।

पुनः किम्भूतम् ? सप्रेम प्रेमसहितं यत् प्रसादवचनमनुग्रहवाक्यं तेन अद्भुतमाश्चर्यकारि ॥ ३४१ – ३४२ – ३४३

समादाय महायोधानायोधनरसोद्धुरान् ।
तुरगानेकपानेकपदातिततिसंयुतः ॥ ३४४
समायातो महामन्त्री महर्द्ध्या शकुनैः शुभैः ।
अजमेरौ गुरुस्तूपयात्रां कर्तुं समाहितः ॥ ३४५ – युग्मम् ।

**व्याख्या** – महामन्त्री महाधीसखः श्री**कर्मचन्द्रः**, समाहितः समाधानोपेतः, महर्द्ध्या महालक्ष्म्योपलक्षितः, शुभैः प्रयाणं प्रत्यनुकूलैः, शकुनैर्दैवशंसिनिमित्तैः, **अजमेरौ** गुरोः श्री**जिनदत्तसूरे**र्यः स्तूपः – उच्छ्रितो मृदादिविकारः – तस्य या यात्रा तां कर्तुं समायातः समाययौ । किं कृत्वा ? आयोधनं रणं तत्र यो रसो रागस्तेनोद्धुरान् तुङ्गान् महायोधान् महासुभटान्, सह आत्मना सममादाय गृहीत्वा; तथा तुरगान् वाजिनः सह आदाय; तथा अनेकपान् हस्तिनः सह आदाय । किम्भूतो महामन्त्री ? अनेके बहवो ये पदातयः पत्तयस्तेषां या ततिः श्रेणिस्तया संयुतः सहितः अनेकपदातिततिसंयुतः ॥ ३४४ – ३४५

क्रमाल्लाभपुरं लेभे लाभाय विहितोद्यमः ।
अविच्छिन्नप्रयाणेन प्रीणितप्राणिसन्ततिः ॥ ३४६

**व्याख्या** – मन्त्री अविच्छिन्नप्रयाणेन अविश्रान्तगमनेन, क्रमात् क्रमेण, **लाभपुरं** लेभे प्राप । किम्भूतः ? लाभाय विशिष्टवस्तुप्राप्तये विहितः कृत उद्यमः प्रयात्रा येन स विहितोद्यमः । पुनः किम्भूतः ? प्रीणिता तोषिता प्राणिसन्ततिर्भक्तजनश्रेणिर्येन स प्रीणितप्राणिसन्ततिः ॥ ३४६

विना प्रयासमेवासौ विनाऽपि परसेवनम् ।
श्रीसाहेर्दर्शनं प्राप पुण्ययोगाच्छुभेऽहनि ॥ ३४७

**व्याख्या** – असौ महामन्त्री, प्रयासमायासं विनैव, तथा परस्य उम्बरादेः सेवनं सेवां विनाऽपि, विनायोगे द्वितीया, पुण्ययोगात् सुकृतसंयोगात्, शुभे कल्याणेऽहनि दिवसे, श्रीसाहेरकबरस्य दर्शनं प्राप ॥ ३४७

**उपदादानतः साहिर्वरिवस्याविधानतः ।**
**वशीकृतो वचोयुक्त्या येन सर्वातिशायिना ॥ ३४८**

**व्याख्या** – येन श्रीकर्मचन्द्रेण, साहिः, उपदा ढौकनं तस्या दानतो वितरणात्, तथा वरिवस्या परिचर्या तस्या विधानतः करणात्, तथा वचोयुक्त्या मधुरप्रस्तावोचितवचनयोजनेन, वशीकृतः स्ववशे नीतः । किम्भूतेन येन ? सर्वानतिशेतेऽधिकीभवतीति सर्वातिशायी तेन सर्वेभ्योऽप्यधिकेनेत्यर्थः ॥ ३४८

**दर्शनं यस्य दुष्प्रापं स्पर्शनं किमु पादयोः ।**
**वादनं तु प्रियैर्वाक्यैर्दूरे यस्य महीपतेः ॥ ३४९**

**व्याख्या** – यस्य महीपतेः श्रीसाहेः, दर्शनमवलोकनं दुष्प्रापं दुर्लभम् । किमु इति वितर्के, किमु किं पादयोश्चरणयोः स्पर्शनं पाणिभ्यां सङ्घट्टनम्, तद्धि विशेषतो दुष्प्रापमित्यर्थः । तु विशेषेऽव्ययम्, तु विशेषेण यस्य महीपतेः प्रियैर्मधुरैर्वाक्यैर्वादनमुल्लापनम्, दूर आरात्, मधुरवाक्यैर्वादनं तु बहुभिः पुण्यैः प्राप्यत इत्यर्थः ॥ ३४९

**दर्शनं स्पर्शनं वाक्यैर्मधुरैर्वादनं तदा ।**
**युगपद् यस्य सम्पन्नं श्रीसाहेः सर्वसाक्षिकम् ॥ ३५०**

**व्याख्या** – तदा तस्मिन्नवसरे, यस्य श्रीमन्त्रिणः, सर्वसाक्षिकं सर्वसभाजनप्रत्यक्षम्, श्रीसाहेः, युगपत् समकालं दर्शनं नेत्राभ्याम्, स्पर्शनं साहिपादयोः, मधुरैर्वाक्यैर्वादनमुल्लापनम्, सम्पन्नं सम्प्राप्तम् ॥ ३५०

**दर्शनादादिमादेव प्राप साहीशमानसम् ।**
**प्रसन्नतामदोऽवादीत् तमुत्साहयितुं ततः ॥ ३५१**

**व्याख्या** – आदिमादेव प्रथमादेव दर्शनात्, श्रीमन्त्र्यवलोकनात्, साहीनामीशः स्वामी साहीशः श्रीअकबरस्तस्य मानसं साहीशमानसम्, प्रसन्नतां प्राप प्रसन्नमभवदित्यर्थः । ततोऽनन्तरं श्रीसाहिस्तं श्रीमन्त्रिराजमुत्साहयितुमुद्यमयितुमदो वक्ष्यमाणमवादीत् ॥ ३५१

तदेवाह – **चिरं मृगयमाणस्य पुमांसं राज्यचिन्तकम् ।**
**प्रापितस्त्वं प्रसन्नेन ममाकस्मान्महात्मना ॥ ३५२**

**व्याख्या** – हे मन्त्रिन् ! चिरं चिरकालं यावद् राज्यचिन्तकं राज्यचिन्ताकारकं पुमांसं पुरुषम्, मृगयमाणस्य अवलोकयतो मम, अकस्मादित्यतर्कितोपनतेऽव्ययम्, अकस्मादविचारितमेव, प्रसन्नेन ममोपर्यनुग्रहोपेतेन, महात्मना परमेश्वरेण, त्वं प्रापित उपढौकितः । मृगयमाणस्येति 'मृगणि अन्वेषणे' ॥ ३५२

**चिन्तां मा कुरुताचित्ते पश्य त्वमचिरादहम् ।**
**महान्तं त्वां विधास्यामि वारिवाह इवाङ्कुरम् ॥ ३५३**

**व्याख्या** – हे मन्त्रिन् ! त्वं चित्ते मनसि, चिन्तां दुरध्यवसायम्, मा कुरुतान्मा कुरु । त्वं पश्य अचिरात् स्तोकेनैव कालेन, त्वां महान्तं सकलनृपमुख्यं विधाताऽस्मि कर्ताऽस्मि । करिष्यामीति भावः । कः कमिव ? वारिवाहो मेघोऽङ्कुरमिव । यथा वारिवाहोऽङ्कुरं प्ररोहं महान्तं करोति वर्धयति तथा त्वामपि करिष्यामीत्यर्थः ॥ ३५३

**अहो भाग्यमहो भाग्यमहो सौभाग्यमद्भुतम् ।**
**समेषामपि लोकानां तदा गीरित्यभूत्तराम् ॥ ३५४**

**व्याख्या** – अहो इति विस्मयेऽव्ययम्, अस्येति गम्यते । अस्य मन्त्रिणोऽहो भाग्यमहो भाग्यं भागधेयम्, राभस्ये द्विरुक्तिः । अहोऽद्भुतं सौभाग्यं जनवाल्लभ्यमित्यमुना प्रकारेण, समेषामपि सर्वेषामपि, लोकानां द्रष्टृजनानाम्, तदा मन्त्रिणः साहिमिलनावसरे गीर्वाण्यभूत्तरामतिशयेन बभूव ॥ ३५४

**सामाजिकजनाध्यक्षं सामजं निजमुत्तमम्।**
**साहिजलालदीर्यस्य प्रसादीकृतवान् कृती ॥ ३५५**

**व्याख्या**—यस्य श्रीकर्मचन्द्रमन्त्रिणः, **जलालदीः** साहिः, सामाजिकजनाः पार्श्वस्थलोकास्तेषामध्यक्षं प्रत्यक्षं सामाजिकजनाध्यक्षम्, निजमात्मीयं सामजं हस्तिनं प्रसादीकृतवान् दत्तवानित्यर्थः। किम्भूतः साहिः? कृती विद्वान् ॥ ३५५

**तुरङ्गः सारसौवर्णोपस्करेण सुसंस्कृतः।**
**साहिना मृगयामार्गे ददे यस्मै प्रमोदतः ॥ ३५६**

**व्याख्या**—यस्मै श्रीमन्त्रिणे, साहिना श्रीअकबरेण, मृगयामार्गे आखेटवर्त्मनि, प्रमोदतो हर्षेण, सारसौवर्णोपस्करेण प्रधानहैमपर्याणखलीनवल्गाद्यङ्गेन, सुसंस्कृतः सुष्ठ्वलङ्कृतस्तुरङ्गो वाजी ददे अदायि। 'अवयवे अपस्करो रथाङ्गम्'। यद्यप्यपस्करशब्दो रथाङ्गे वर्तते, तथाप्यसाववयवमात्रे ग्राह्यः, तेनात्र वाजिभूषावयवेऽपि प्रयुज्यमानो न दोषाय ॥ ३५६

**गञ्जं धनस्य यस्य स्राक् चकार करगोचरम्।**
**साहिर्विश्वासमासाद्य विश्वविश्वाससद्मनः ॥ ३५७**

**व्याख्या**—यस्य श्रीमन्त्रिराजस्य, विश्वासं विस्रम्भमासाद्य प्राप्य, धनस्य द्रव्यस्य, गञ्जं भाण्डागारम्, स्राक् शीघ्रम्, करगोचरं पाणिविषयं चकार। गञ्जरक्षणं यस्मै अदत्तेत्यर्थः। किम्भूतस्य यस्य? विश्वस्य जगतो विश्वाससद्म विस्रम्भगृहं तस्य विश्वविश्वाससद्मनः। 'गञ्जो भाण्डागारे रीढाखन्योः' इत्य**नेकार्थः**। गञ्जति गञ्जनं वा, गञ्जो भाण्डागारे पुंक्लीबः ॥ ३५७

**वाजिसामजपत्त्यादिलोकसंवासहेतवे।**
**तोसामदेशसाम्राज्यं ददौ तस्मै महीपतिः ॥ ३५८**

**व्याख्या**—तस्मै श्रीकर्मचन्द्राय, महीपतिः साहिः, वाजिनो हयाः, सामजा हस्तिनः, पत्तयः पदातयः, ते आदौ येषां लोकानां सेवकजनानां ते वाजिसामजपत्त्यादिलोकास्तेषाम्, संवासोऽवस्थानम्, तद्धेतवे तन्निमित्तम्, **तोसामदेशस्य** साम्राज्यमाधिपत्यं ददौ ॥ ३५८

**मूलनक्षत्रदोषेण युता जाता सुताऽन्यदा।**
**श्रीसलेमसुरत्राणमन्दिरे सुतसुन्दरे ॥ ३५९**

**व्याख्या**—अन्यदाऽन्यस्मिन् काले, **श्रीसलेमसुरत्राणमन्दिरे** साहिजादाशेखूजीगृहे, मूलनक्षत्रदोषेण युता सहिता सुता दुहिता जाता अजनिष्ट। मूलस्य प्रथमपादादौ जातेत्यर्थः। **रत्नमालायां** मूलजातस्यैवं दोषः प्रत्यपादि—

'अभुक्तमूलसम्भवं परित्यजेच्च बालकम्। समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् ॥ १
तदाद्यपादके पिता विपद्यते जनन्यथ। धनक्षयस्तृतीयके, चतुर्थकः शुभावहः ॥ २'

किम्भूते?, सुतेन **घुसरूसुरत्राणेन** सुन्दरे मनोहरे ॥ ३५९

**ततः श्रीसाहिना शेष(ख)प्रमुखा विबुधा नराः।**
**तद्दोषस्य प्रतीकारकृते व्यापारिता ननु ॥ ३६०**

**व्याख्या**—नन्वित्यामन्त्रणे, ततः सुताजन्मानन्तरम्, श्रीसाहिना **शेष(ख)प्रमुखा अवलफजलप्रभृतयो** विबुधा विचक्षणाः, नरा आमन्त्र्य, तद्दोषस्य मूलजातदोषस्य, प्रतीकारकृते स्फेटनार्थम्, व्यापारिता नियोजिताः। यथा, हे दक्षाः! भवद्भिर्मूलजातदोषमोषाय यत्नः कोऽपि कर्तव्य इति ॥ ३६०

**समाहूय ततोऽमात्यं साहिरेवं समादिशत्।**
**श्रीजैनदर्शने शान्तिविधिर्योऽस्ति विधेहि तम् ॥ ३६१**

**व्याख्या**—ततः **श्रीशेषा(खा)दीनां** कथनानन्तरम्, अमात्यं सचिवं समाहूय आकार्य, साहिरेवं वक्ष्यमाणं समादिशत्

आदिष्टवान् अचीकथदित्यर्थः । तदेवाह – हे मन्त्रिन् ! श्रीजैनदर्शने जैनमते, यः शान्तिविधिर्जैनसमयप्रसिद्धो दोषशान्त्यै अस्ति विद्यते, तं शान्तिविधिं विधेहि कुरुष्व ॥ ३६१

**सम्मान्य साहिसंदिष्टं विशिष्टविधिनाऽमुना ।**
**कारितं शान्तिकस्नानं स्वर्णरूप्यमयैर्घटैः ॥ ३६२**
**माङ्गल्यदीपवेलायां शेषू(खू)जीः साहिनन्दनः ।**
**आयातः सत्कृतो रौप्यसहस्रदशकार्पणात् ॥ ३६३ –युग्मम् ।**

**व्याख्या** – अमुना श्रीकर्मचन्द्रेण, साहिना श्रीअकबरेण संदिष्टं कथितम् – यत्त्वं शान्तिकं विधेहीत्येतद्रूपम् – सम्मान्य बहु मानयित्वा, 'तसलीम'पुरस्सरं स्वीकृतेत्यर्थः । स्वर्ण-रूप्यमयैर्घटैः सौवर्ण-रौप्यकलशैः, विशिष्टविधिना सुन्दरशास्त्रोक्त-प्रकारेण, शान्तिकस्नानं कारितम् । श्रीजिनप्रतिमानवग्रहदिक्पालादिव्यवस्थापनादिशान्तिकविधिर्गुरूपदेशतोऽवसेयः । तथा माङ्गल्यदीपवेलायां मङ्गलहेतुप्रदीपकरणावसरे, साहिनन्दनः श्रीअकबरपातसाहिपुत्रः शेषू(खू)जीः आयातः । रौप्याणां रूप्य-नाणकविशेषाणां सहस्रदशकस्य यदर्पणं दानं दशसहस्रराजतढौकनमित्यर्थः । तस्माद्रौप्यसहस्रदशकार्पणात् सत्कृतो गौरवितः । मङ्गले साधुर्मङ्गल्यः । 'तत्र साधुः' इति यत् । 'मङ्गल्यो रुचिरेऽश्वत्थे त्रायमाणे मसूरके बिल्वे' इत्यनेकार्थः । रुचिरे मङ्गल-हेतौ वाच्यलिङ्गः ॥ ३६२ – ३६३

**शान्तिकस्नानपानीयमानीय नयनद्वये ।**
**श्रीसाहेः सावरोधस्य लगयामास शान्तये ॥ ३६४**

**व्याख्या** – मन्त्री सावरोधस्य अन्तःपुरसहितस्य श्रीसाहेः, शान्तये दोषोपशमाय, नयनद्वये नेत्रयुगे, शान्तिस्नान-पानीयं शान्तिकजलमानीय नीत्वा, लगयामास लगयति स्म । लग्गे सङ्गे ॥ ३६४

**मुदमासादयामास कृत्येऽस्मिन् मन्त्रिणा कृते ।**
**दोषमोषरमापोषकारणैः को न तुष्यति ॥ ३६५**

**व्याख्या** – मन्त्रिणाऽस्मिन् शान्तिकस्नानरूपे कृत्ये कार्ये कृते सति, श्रीसाहिर्मुदं हर्षमासादयामास प्राप । यतो दोषाणाममङ्गलरूपाणां यो मोषोऽपनयनम्, रमायाः शान्तिलक्ष्म्या यः पोषः पुष्टिस्तयोर्यानि कारणानि हेतवस्तैर्दोषमोषरमा-पोषकारणैः, को न तुष्यति हृष्यति ? अपि तु सर्वोऽप्येवंविधविधिविधाने प्रीयत इत्यर्थः ॥ ३६५

**अन्यदा कोविदव्यूहे गुणागुणविचारिणि ।**
**प्रगुणे साहिराह स्म को गुणी जैनदर्शने ? ॥ ३६६**

**व्याख्या** – अन्यदाऽन्यस्मिन् प्रस्तावे, गुणांश्च अगुणांश्च विचारयति विमृशतीत्येवंशीलो गुणागुणविचारी, तस्मिन् गुणागुणविचारिणि, कोविदव्यूहे पण्डितसमूहे सति, साहिराह स्म अब्रवीद् – भोः पण्डिताः ! प्रगुणे प्रकृष्टगुणे निर्दोषे जैनदर्शने को गुणी प्रशस्तगुणवान् ? । अतिशायने मत्वर्थीयः ॥ ३६६

इति साहिनोक्ते सति कोविदैः [ यदुक्तं तदाह ] –

**जिनचन्द्रो गुरुः प्रौढमाहात्म्योऽस्ति महामतिः ।**
**श्रुत्वोक्तं साहिरप्राक्षीत् कः शिष्योऽमुष्य वर्तते ? ॥ ३६७**

**व्याख्या** – प्रौढं प्रवृद्धं माहात्म्यं महिमा यस्य असौ प्रौढमाहात्म्यः, महामतिर्महाधिषणो जिनचन्द्रो गुरुः श्रीजिन-चन्द्रसूरिः, अस्ति विद्यते । इतीति गम्यते । इति श्रुत्वा परेभ्यो उक्तं निशम्य, ततः साहिः अप्राक्षीत् अपृच्छत् – अमुष्य श्रीजिनचन्द्रसूरेः कः शिष्यो भक्तो वर्तते ? ॥ ३६७

**कर्मचन्द्र इति प्राज्ञैरुक्तेऽथाहूय मन्त्रिणम् ।**
**साहिः प्राह गुरुस्तेऽत्र यथाऽऽयाति तथा कुरु ॥ ३६८**

**व्याख्या** – प्राज्ञैः पण्डितैः **कर्मचन्द्रो** मन्त्रीत्युक्ते सति, अथ अनन्तरम्, **साहिरकबरो** मन्त्रिणमाहूय आकार्य, प्राह प्रकर्षेण आह उवाच । आहेत्युवाचार्थे तिङन्तप्रतिरूपकमव्ययम् । हे मन्त्रिन् ! ते तव गुरुः श्रीजिनचन्द्रसूरिर्यथा येन प्रकारेणाऽत्र **लाभपुर** आयाति तथा त्वं कुरु विधेहि ॥ ३६८

**ततो विचार्य मन्त्रीशश्चतुर्बुद्धिनिधिः सुधीः ।**
**श्रीजैनशासनोद्योतकरणैकपरायणः ॥ ३६९**
**फुरमानकरोदारसौरत्राणनरद्वयम् ।**
**मुमोच गौर्जरत्रायां गुरोराह्वानहेतवे ॥ ३७० – युग्मम् ।**

**व्याख्या** – ततोऽनन्तरम्, मन्त्रीशः श्री**कर्मचन्द्रः**, विचार्य विमृश्य, गुरोः श्री**जिनचन्द्र**सूरेराह्वानहेतवे आकारणनिमित्तम्, **गौर्जरत्रायाम्**, फुरमानमादेशपत्रं करे यस्यैवंविधं तथोदारं यत्सौरत्राणनरद्वयं साहिसत्कपुरुषयुगं फुरमानकरोदारसौरत्राणनरद्वयं मुमोच प्राहिणोत् । किम्भूतो मन्त्रीशः ? चतसृणां बुद्धीनामौत्पातिकी-वैनयिकी-कर्मजा-पारिणामिकीरूपाणां निधिः शेवधिश्चतुर्बुद्धिः; पुनः किम्भूतः ? सुधीर्विचक्षणः, पुनः किम्भूतः ? श्रीजैनशासनस्योद्योतकरणे प्रभासन एकोऽद्वितीयः परायणः प्रवणः श्रीजैनशासनोद्योतकरणैकपरायणः ॥ ३६९ – ३७०

**साहिपत्रं समासाद्य स्तम्भतीर्थे यतीश्वराः ।**
**जिनचन्द्राः समाजग्मू राजधानीपुरं ततः ॥ ३७१**

**व्याख्या** – ततोऽनन्तरं **जिनचन्द्रा** यतीश्वराः **स्तम्भतीर्थे** साहिपत्रं साहिफुरमानं समासाद्य प्राप्य, **राजधानीपुरं अहम्मदावादं** समाजग्मुः समायाताः ॥ ३७१

**पुनः शकुनसामग्रीसञ्जातद्विगुणोद्यमाः ।**
**विहृत्य मध्यमार्गेण सङ्घमाशास्य गौर्जरम् ॥ ३७२**
**भूत्वा शिवपुरीमध्यं लात्वा लाभं दयामयम् ।**
**सुरत्राणप्रभुप्रत्तं प्राप्ता जावालसत्पुरम् ॥ ३७३ – युग्मम् ।**

**व्याख्या** – पुनर्भूयः, श्री**जिनचन्द्राः**, शकुनानां दैवशंसिनिमित्तानां या सामग्री समुदायस्तया सञ्जात उत्पन्नो द्विगुण उद्यमः साहिमिलनायोत्साहो येषां ते शकुनसामग्रीसञ्जातद्विगुणोद्यमा एवंविधाः सन्तः, मध्यमार्गेण अन्तरालवर्त्मना विहृत्य प्रस्थाय, तथा **गौर्जरं** सङ्घमाशास्य धर्मलाभमित्याशीर्वचनं दत्त्वा, तथा **शिवपुरीमध्यं** भूत्वा, तथा सुरत्राणप्रभुप्रत्तं दयामयं लाभं लात्वा, **जावालसत्पुरं** प्राप्ताः ॥ ३७२ – ३७३

**प्रेषितः साहिना तत्र फुरमानयुगध्वगः ।**
**ध्यात्वेति गुरवो दुःखं माऽऽप्नुयुः सत्वरागतेः ॥ ३७४**

**व्याख्या** – तत्र **जावालपुरे**, साहिना सत्वरागतेस्त्वरितागमनेन, गुरवः श्री**जिनचन्द्र**सूरयः, दुःखमसुखं मा आप्नुयुर्मा प्राप्नुवन्तु इति ध्यात्वा विमृश्य, फुरमानयुक् फुरमानसहितोऽध्वगः पथिकः प्रेषितो मुक्तः । मा आप्नुयुरित्यत्र निमन्त्रणे लिङ्लोटौ । 'सायं प्रत्युद्व्रजेदपि' इति **कालिदासप्रयोगवत्** ॥ ३७४

**विज्ञापितमिति पत्रे गुरुभिः कार्यं न देहदौष्कर्यम् ।**
**ससुखं ससुखं शनकैः शनकैर्मार्गे समेतव्यम् ॥ ३७५**

**व्याख्या** – साहिना पत्रे फुरमान इति विज्ञापितं विशेषेण ज्ञापितं बोधितम् – यद्गुरुभिर्देहदौष्कर्यं शरीरक्लेशो न कार्यम् । ससुखं ससुखं – सुखेन सुखेनेत्यर्थः, शनकैः शनकैर्मन्दं मन्दं मार्गे समेतव्यम् ॥ ३७५

**स्थित्वा जावालपुरे वर्षावासं ततः कृतोल्लासम् ।**
**मासे सहसि विजहुर्गुरवो गुरुदैवतर्क्षदिने ॥ ३७६**

**व्याख्या** – ततः फुरमानागमनानन्तरं **जावालपुरे**, वर्षावासं स्थित्वा; सहसि मार्गशीर्षे मासे, गुरुदैवतर्क्षदिने पुष्यनक्षत्रवद्वासरे, विजहुर्जावालपुराद् विहारं चक्रुः । किम्भूतं वर्षावासम् ? कृतः कार्षकाणामुल्लासो हर्षविलासो येन स कृतोल्लासस्तम् ॥ ३७६

**पल्लिपुरमेदिनीतटनागपुरादिषु पुरेषु भूयस्सु ।**
**सङ्घकृतोत्सवनिवहा गुरवो बहुसाधुपरिकरिताः ॥ ३७७**
**विक्रमपुरीयसङ्घं नागपुरे वन्दनार्थमायातम् ।**
**व्यापारितबहुऋद्धिं प्रोत्साह्य ततो विहृतवन्तः ॥ ३७८** – युग्मम् ।

**व्याख्या** – गुरवः श्री**जिनचन्द्रसूरयः**, **पल्लिपुर-मेदिनीतट-नागपुरादिषु** भूयस्सु बहुलेषु पुरेषु, सङ्घेन कृत उत्सवनिवहो महसमूहो येषां ते सङ्घकृतोत्सवनिवहाः, तथा बहुभिर्घनैः साधुभिः परिकरिताः परिवृता एवंविधाः सन्तः, **नागपुरे** वन्दनार्थं वन्दननिमित्तम्, आयातमागतं **विक्रमपुरी**यसङ्घं प्रोत्साह्य धर्मवचनैः प्रोत्साहं धर्म उद्यमं कारयित्वा, ततो नागपुराद् विहृतवन्तो विजहुः । किम्भूतं विक्रमपुरीयसङ्घम् ? व्यापारिता साधर्मिकवनीपकेषु नियोजिता दत्तेत्यर्थः, बह्वी घना ऋद्धिः श्रीर्येन स तं व्यापारितबहुऋद्धिम्, ऋत्यक इति ऋति परेऽकः प्राग्वत् प्रकृतिभाव इत्यर्थः ॥ ३७७ – ३७८

**मरुविषयमध्यमार्गे ग्रामग्रामागतास्तिकव्रातम् ।**
**वन्दापयन्त ईयुः श्रीपूज्याः श्रीरिणीनगरे ॥ ३७९**

**व्याख्या** – मरुविषयस्य **मरुदेशस्य**, मध्यमार्गे **बापेऊ-राजलदेसर-मालसर**प्रभृतिग्रामक्रमयुक्तवर्त्मनि अन्तरालवर्त्मनि, ग्रामेभ्यो ग्रामेभ्य आगतो य आस्तिकव्रातः श्राद्धवृन्दं तं वन्दापयन्तो नमस्कारयन्तः, श्रीपूज्याः श्री**जिनचन्द्र**सूरयः श्री**रिणीनगर** ईयुः समाययुः । अस्ति परलोके मतिर्यस्य स आस्तिकः । अस्तीति तिङन्तप्रतिरूपकमव्ययम्, 'अस्तिनास्तिदिष्टं मतिः' इति ठक् । ननु कथं कारापयति वन्दापयति कथापयति लेखापयतीत्यादि ? उच्यते–महाकविप्रयुक्ता एते प्रयोगाः क्वापि न दृश्यन्ते । यदि च क्वचन सन्ति ते तदैवं समर्थनीयाः – करणं कारस्तमनुयुङ्क्ते त्वं कुरुष्वेति प्रेरयतीत्यर्थः । उत्पलमतेन 'अतो ञ्णिति' इति वृद्धौ प्वागमे भृत्येन कारापयति, एवं वन्दापयतीत्यादिष्वपि, इति **क्रियारत्नसमुच्चये** । ततो वन्दापयन्त इति प्रयोगः शतरि न दुष्टः ॥ ३७९

**कतिचिद्दिनानि तत्र स्थित्वा समहं समाधियोगेन ।**
**सचिवस्य भक्तिकर्तुः साचिव्याद् वीरदासस्य ॥ ३८०**
**अवगाह्य वर्त्म विषमं सरस्वतीपत्तनादिपुरमध्ये ।**
**भूत्वा भूतानुग्रहपरास्ततो लाभपुरमीयुः ॥ ३८१** – युग्मम् ।

**व्याख्या** – भूतेषु प्राणिषु अनुग्रहपराः प्रसादपरा भूतानुग्रहपराः – भूतानामुपर्यनुग्रहकारिण इत्यर्थः । श्री**जिनचन्द्र**सूरयस्तत्र **रिण्यां** समहं ससङ्घमन्त्रिश्री**ठाकुरसिंह**सुतमन्त्रि**राजसिंह**विहितोत्सवसहितं यथा स्यात्तथा, समाधियोगेन कायवाङ्मनःसमाधानसंयोगेन, कतिचिद्दिनानि स्थित्वा अवस्थाय, भक्तिकर्तुः सेवाविधायकस्य **वीरदासस्य** सचिवस्य मन्त्रिणः, साचिव्यात् साहाय्याद्, विषमं दुर्गमं वर्त्म मार्गमवगाह्य अतिक्रम्य, **सरस्वतीपत्तना**दिमध्ये भूत्वा, ततोऽनन्तरं **लाभपुर**मीयुः समाययुः । 'सचिवः सहायेऽमात्ये' इत्य**नेकार्थः** । सचिवस्य भावः साचिव्यं 'भावे त्वयण' इति यण् ॥ ३८० – ३८१

**प्रवेशदिन एवात्र मेलिता येन मन्त्रिणा ।**
**जिनचन्द्राः ससम्मानाः श्रीसाहेर्महवासरे ॥ ३८२**

**व्याख्या** – अत्र **लाभपुरे**, येन मन्त्रिणा, प्रवेशदिन एव, श्रीसाहेर्महवासर ईददिने, ससम्मानाः सत्कारपूर्वकमित्यर्थः, **जिनचन्द्रा** मेलिताः । यद्दिने श्रीपूज्याः श्रीसाहिममिलन् तद्दिन ईददिनमासीदिति ॥ ३८२

**साहिना दर्शनादेव गवाक्षोत्सङ्गतस्त्वरा ।**
**बन्धुनेवावतीर्यातिप्रेमापूर्णहृदा तदा ॥ ३८३**
**आगत्याभिमुखं सत्यबहुमानपुरस्सरम् ।**
**निरामयसुखायातिप्रश्नपूर्वं प्रशंसिताः ॥ ३८४ – युग्मम् ।**

**व्याख्या** – तदा तस्मिन्नवसरे, साहिना **अकबरेण**, दर्शनादेव गुरोरवलोकनादेव, गवाक्षोत्सङ्गतो वातायनक्रोडात्, त्वरा शीघ्रमवतीर्य, [ बन्धुनेव सहोदरेणेव ] अभिमुखं सम्मुखमागत्य, सत्यबहुमानपुरस्सरमवितथसत्कारपूर्वकम्, निरामयो निर्देशस्य भावप्रधानत्वान्निरामयता नीरोगता सुखायातिः सुखागमनं तयोर्यः प्रश्नः पृच्छा तत्पूर्वं निरामयसुखायातिप्रश्नपूर्वम्, श्रीगुरवः प्रशंसिताः श्लाघिताः । यथा श्रीगुरूणां निरामयता वर्तते ? सुखेन आगताः ? इति प्रश्नकरणपूर्वकं स्तुता इत्यर्थः । किम्भूतेन साहिना ? अतिप्रेम्णाऽधिकस्नेहेन, आपूर्णं सम्भृतं हृत् हृदयं यस्यासौ तेन अतिप्रेमापूर्णहृदा ॥ ३८३ – ३८४

**उक्तं च साहिनाऽस्माकं धर्मगोष्ठीं वितन्वताम् ।**
**युष्मादृशा निराशंसाः स्युस्तदा तत्र सुन्दरम् ॥ ३८५**

**व्याख्या** – च पुनः, साहिनोक्तमस्माकं धर्मगोष्ठीं धर्मसंलापं वितन्वतां विस्तारयतां सताम्, यदि युष्मादृशा निराशंसा निरीहाः स्युर्भवन्ति, तदा तत्र धर्मगोष्ठ्यां सुन्दरं चारु । 'गोष्ठी संलापे परिषद्यपि' इत्य**नेकार्थः** ॥ ३८५

**विमृश्यैवं समाहूता मया गौर्जरमण्डलात् ।**
**भवन्तोऽपि कृपापूर्णा आजग्मुर्निःस्पृहा अपि ॥ ३८६**

**व्याख्या** – हे गुरवो ! भवन्त एवं पूर्वोक्तं विमृश्य विचार्य, मया गौर्जरमण्डलाद् **गौर्जरदेशात्**, समाहूता आजुहुवि(ह्वि ?)रे, भवन्तोऽपि निःस्पृहा अपि निराकाङ्क्षा अपि, कृपापूर्णाः करुणाभृता आजग्मुरागताः ॥ ३८६

**युष्माकं भूतपूर्वो यः खेद आगच्छतामिह ।**
**अपाकरिष्यतेऽस्माभिः स महाधर्मवर्धनात् ॥ ३८७**

**व्याख्या** – हे गुरवो ! युष्माकं स्तम्भतीर्थादिह लाभपुर आगच्छतां यः खेदः शोकः – श्रम इत्यर्थः, पूर्वं भूतो भूतपूर्वः सोऽस्माभिर्महाधर्मवर्द्धनात् जीवदयादिदानात्, अपाकरिष्यते दूरीकरिष्यते ॥ ३८७

**पुनरुक्तमिवाभाति सर्वमाशास्यमात्मनि ।**
**ममाशीस्तादृशी देया यया स्यान्मे दयालुता ॥ ३८८**

**व्याख्या** – हे भगवन् ! आत्मनि मयि, सर्वमाशास्यम् आशीर्वचनं तव राज्यश्रीरस्तु तव पुत्रा भवन्त्वित्यादि पुनरुक्तमिव आभाति चेतसि प्रतिभाति । यद्विद्यमानमपि पुनरुच्यते तत्पुनरुक्तं पिष्टपेषणमिव निरर्थकम् । सर्वमपि तन्मत्समीपेऽस्त्येव ततः किं तयाऽऽशिषा ? । परं मम आशीर्मङ्गलशंसनं तादृशी देया यया आशिषा मे मम दयालुता कृपालुता स्याद् यथा मच्चित्तं करुणापरं स्यात् तथा कार्यमिति भावः । नन्वाशास्यमिति कथम् ? एतिस्तु शास्त्विति क्यपि 'शास इदङ् हलोः' इतीत्वप्राप्तेः शिष्य इति स्यात् ? उच्यते, आशासनमाशासस्तस्य तत्करोतीति णिच् यत्प्रत्ययश्च ॥ ३८८

**यादृशी मतिरस्माकं दयायां विद्यते स्थिरा ।**
**तादृगस्मदपत्येऽपि यथा स्याद् यत्यतां तथा ॥ ३८९**

**व्याख्या** – हे भगवन् ! अस्माकं दयायां कृपायां यादृशी मतिर्बुद्धिः स्थिरा चिरमवस्थायिनी विद्यते तादृक् तादृशी, दयायां स्थिरा मतिरस्मदपत्येऽप्यस्मत्सन्तानेऽपि यथा स्यात्तथा यत्यतां यत्नः क्रियताम् । अस्मदपत्यान्यपि यथा कृपालूनि भवन्ति तथा आशास्यमिति भावः ॥ ३८९

**एकशो दर्शनं देयं युष्माभिः प्रतिवासरम् ।**
**अस्माकं धर्मवृद्ध्यर्थमवारितगतागतैः ॥ ३९०**

**व्याख्या**—हे गुरवः ! युष्माभिः प्रतिवासरं प्रतिदिनमेकश एकवारम्, अस्माकं धर्मवृद्ध्यर्थं धर्मवृद्धिहेतवे, अवारितगतागतैरस्खलितगमनागमनैः, दर्शनमवलोकनं देयम् । प्रतिदिनमेकवारं श्रीगुरुभिर्मद्वृद्धिकायां समेतव्यमिति भावः । एकश इति 'संख्यैकवचनाच्च वीप्सायां' इति शस् ॥ ३९०

**एवमाज्ञां समासाद्य श्रीसाहेर्गुरवो निजाम् ।**
**वसतिं प्रापुरत्यर्थं मानसोत्साहनिर्भराः ॥ ३९१**

**व्याख्या**—एवं पूर्वोक्तां श्रीसाहेराज्ञामादेशं समासाद्य प्राप्य, गुरवः श्री**जिनचन्द्र**सूरयो निजामात्मीयां वसतिमुपाश्रयं प्रापुः । किम्भूताः ? अत्यर्थमतिशयेन मानसोत्साहेन चित्तोद्यमेन निर्भराः सम्पूर्णा मानसोत्साहनिर्भराः ॥ ३९१

**तत्रामात्यं समभ्यर्थ्य साहिसम्मतदर्शनः ।**
**प्रवेशोत्सवमातेने श्राद्धः पर्वतनामकः ॥ ३९२**

**व्याख्या**—तत्र वसतिप्रवेशाधिकारेऽमात्यं श्री**कर्मचन्द्र**मन्त्रिणं समभ्यर्थ्य याचयित्वा, यदि श्रीमन्त्रिराजाज्ञा स्यात्तदा अहं प्रवेशमहं करोमीति मार्गयित्वा, **पर्वत**नामको **जुहरी** पर्वतनामा श्राद्धः, प्रवेशोत्सवं पादप्रसारमहमातेने विस्तारयामास । किम्भूतः पर्वतकः ? साहेः श्री**अकबर**स्य सम्मतमभिमतं दर्शनमवलोकनं यस्य स साहिसम्मतदर्शनः ॥ ३९२

**प्रभावनाविधानादिकृत्यं च सदुपासकैः ।**
**अन्यैरपि यथावित्तं व्यधायि प्रतिवासरम् ॥ ३९३**

**व्याख्या**—च पुनः, अन्यैरप्यपरैरपि, सदुपासकैः सुश्रावकैः, यथावित्तं वित्तमनतिक्रम्य यथावित्तं वित्तानतिक्रमेण, प्रतिवासरं प्रतिदिनम्, प्रभावनाविधानादिकृत्यं व्यधायि विदधे ॥ ३९३

**बृहद्गुरुतया पूज्याः ख्यातिमाप्ताः पुरेऽखिले ।**
**साहिसम्मानतो यस्माज्जना वृद्धानुगामिनः ॥ ३९४**

**व्याख्या**—साहिसम्मानतः साहिसत्कारात्, पूज्याः श्री**जिनचन्द्र**सूरयः, अखिले समस्ते पुरे, बृहद्गुरुतया 'बडे गुरू' इत्याख्यया, ख्यातिं प्रसिद्धिमाप्ताः प्राप्ताः । यस्माद्धेतोर्जना लोका वृद्धानुगामिनो वृद्धानुसारिणः । यद्वृद्धा वदन्ति तल्लोकैरप्युच्यते । साहिना 'बडे गुरू' इत्युक्तं ततो लोकैरप्येवमेवोच्यते ॥ ३९४

**श्रीसाहेराग्रहात् तत्र धर्मगोष्ठीपरायणाः ।**
**दयाधर्मं वितन्वाना वर्षावासं प्रचक्रिरे ॥ ३९५**

**व्याख्या**—तत्र **लाभपुरे**, श्रीसाहेराग्रहादनुग्रहाद्, धर्मगोष्ठ्यां धर्मसंलापे परायणाः प्रवणाः, दयाधर्मं कृपाधर्मं वितन्वाना विस्तारयन्तः, श्रीबृहद्गुरवो वर्षावासं वर्षाचतुर्मासीं प्रचक्रिरे व्यधुः ॥ ३९५

**अन्यदा द्वारकासत्कचैत्यध्वंसेऽमुना श्रुते ।**
**श्रीजैनचैत्यरक्षायै विज्ञप्तः श्रीजलालदीः ॥ ३९६**

**व्याख्या**—अन्यदा अन्यस्मिन् समये, **द्वारका**सत्कानां द्वारकासम्बन्धिनां चैत्यानाम्, **नवरङ्गखान**कृते ध्वंसे विनाशे, अमुना श्री**कर्मचन्द्रे**ण श्रुते सति, मा कदाचिज्जिनचैत्यानामपि विनाशमसौ नवरङ्गखानो विधत्तामिति श्रीजैनचैत्यरक्षायै श्रीआर्हतविहाराभङ्गत्वहेतवे श्री**जलालदीरकबरो** विज्ञप्तः ॥ ३९६

अथ विज्ञप्तौ कृतानां साहिना यद्विदधे तदाह—

**नाथेनाथ प्रसन्नेन जैनास्तीर्थाः समेऽपि हि ।**
**मन्त्रिसाच्चक्रिरे नूनं पुण्डरीकाचलादयः ॥ ३९७**

**व्याख्या**—अथ विज्ञप्त्यनन्तरम्, प्रसन्नेन तुष्टेन नाथेन स्वामिना साहिना, समेऽपि समस्ता अपि, हि स्फुटम्,

**पुण्डरीका**चलादयः **शत्रुञ्जय**प्रभृतयस्तीर्थाः पुण्यक्षेत्राणि, नूनं निश्चितम्, मन्त्रिसाच्चक्रिरे मन्त्र्यधीना विदधिरे । 'तदधीनवचने' इति तदधीनत्वार्थे सातिः स्यात् सम्पदा कृभ्वस्तिभिर्योगे । तरन्त्यनेन तीर्थम्, 'नीनूरमीति' कित् थः ।

'तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः । ऋषिजुष्टे जले सत्रिण्युपाये स्त्रीरजस्यपि ॥

योनौ पात्रे दर्शनेषु' – इत्यनेकार्थः । पुण्यक्षेत्रावतारयोः पुंक्लीबः, शेषेषु क्लीबे ॥ ३९७

**आजमखानमुद्दिश्य मुद्रितं निजमुद्रया ।**
**फुरमानमदात् साहिर्यस्मै प्रीणितमानसः ॥ ३९८**

**व्याख्या** – साहिः **श्रीअकबरः**, प्रीणितमानन्दितं मनो यस्यासौ प्रीणितमाना एवंविधः सन्, यस्मै श्रीमन्त्रिणे निजमुद्रया आत्मीयाङ्गुलीयकेन मुद्रितमङ्कितं फुरमानं तीर्थरक्षानिवेदकपत्रम्, **आजमखान**मुद्दिश्य अधिकृत्य अदात् ददौ । आजमखानं प्रति फुरमानं दत्तं साहिना यन्मया जैनतीर्थानि मन्त्रिश्री**कर्मचन्द्रा**य दत्तानि सन्ति त्वया सम्यगेषां रक्षा विधेयेति ॥ ३९८

**उद्धारान् सप्त चैत्यानां कारणाद् विदधुः पुरा ।**
**महान्तः पुण्डरीकाद्रौ रक्षणात् स कृतोऽमुना ॥ ३९९**

**व्याख्या** – **पुण्डरीकाद्रौ श्रीशत्रुञ्जये,** चैत्यानां कारणाद् विधापनात्, पुरा पूर्वम्, महान्तो भरतादयः सप्तोद्धारान् पतितपुनर्नवीकरणरूपान् विदधुरकार्षुः । अमुना **श्रीकर्मचन्द्रेण** रक्षणान्म्लेच्छकृतभङ्गोपद्रवदूरीकरणात्, सोऽष्टम उद्धारः कृतः ॥ ३९९

**कश्मीरान् गन्तुकामेनान्यदा नौमध्यवर्तिना ।**
**साहिना मुदितेनैवमुदितो मन्त्रिनायकः ॥ ४००**

**व्याख्या** – अन्यदा अन्यस्मिन् समये, **कश्मीरान्** गन्तुकामेन जिगमिषुणा, नौमध्यवर्तिना तरीमध्यस्थायिना, मुदितेन हृष्टेन, साहिना **श्रीअकबरेण**, मन्त्रिनायकः श्री**कर्मचन्द्रः**, [एवमनया रीत्या] उदित उक्तः ॥ ४००

अथ यदुक्तं साहिना मन्त्रिणं प्रति तदाह –

**जिनचन्द्रास्त्वया तूर्णमाह्वाय्या वचसा मम ।**
**धर्मलाभो महांस्तेषां मया देयोऽस्ति वाञ्छितः ॥ ४०१**

**व्याख्या** – हे मन्त्रिन्! मम वचसा त्वया तूर्णं शीघ्रं **जिनचन्द्रा बृहद्गुरव** आह्वाय्या आकार्याः । यस्मात्तेषां बृहद्गुरूणाम्, मया महान् धर्मलाभो वाञ्छितस्तेषामिष्टो देयोऽस्ति ॥ ४०१

**पूज्या अपि तदाहूता ययुः श्रीसाहिसन्निधौ ।**
**श्रीगुरोर्दर्शनादेवानन्दितोऽभून्नराधिपः ॥ ४०२**

**व्याख्या** – तेन श्री**कर्मचन्द्रेण**, आहूता आकारितास्तदाहूताः, पूज्या अपि, श्रीसाहिसन्निधौ श्रीसाहिसमीपे ययुरगच्छन् । नराधिपः श्रीसाहिः श्रीगुरोर्दर्शनादेव अवलोकनादेव आनन्दितः प्रमुदितोऽभूत् ॥ ४०२

**शुचिमासे शुचौ पक्षे प्रसन्नो दिनसप्तकम् ।**
**नवमीतो ददौ साहिरमारिगुणपावनम् ॥ ४०३**

**व्याख्या** – शुचिमास आषाढमासे, शुचौ श्वेते पक्षे, साहिः प्रसन्नस्तुष्टः सन्, नवमीत आरभ्य दिनसप्तकममारिगुणेन पावनं पवित्रं ददौ । आषाढसितनवम्या आरभ्य दिनसप्तकं न कोऽपि जीवहिंसां कर्तुमलमिति साहिन आज्ञप्तं श्री**जिनचन्द्रगुरूणां** पुण्यहेतव इति भावः ॥ ४०३

**एकादशसु शुम्बेषु फुरमानानि साहिना ।**
**अमारिघोषणां कर्तुं लेखयित्वाऽर्पितान्यहो ! ॥ ४०४**

**व्याख्या**—साहिना श्रीअकबरेण, एकादशसु शुम्बेषु 'पडगना' इति रूढ्या प्रसिद्धेषु, अमारिघोषणां कर्तुं फुरमानानि लेखयित्वा, अर्पितानि दत्तानि। अहो इति विस्मये ॥ ४०४

पातिसाहिमनोह्लादहेतवे निखिलैरपि।
देशाधीशैः स्वदेशेषु दश-पञ्चाधिकान् दिनान् ॥ ४०५
दिनानां विंशतिं कैश्चिदन्यैस्तत्पञ्चविंशतिम्।
मासं मासद्वयं यावदपरैरभयं ददे ॥ ४०६ – युग्मम्।

**व्याख्या**—पातिसाहेर्यो मनोह्लादो मनःप्रमोदस्तस्य हेतवे निमित्तं पातिसाहिमनोह्लादहेतवे, निखिलैरपि समस्तैरपि, देशाधीशैर्देशस्वामिभिः, स्वदेशेषु पञ्चाधिकान् दशदिनान् पञ्चदशवासरान् यावत्, तथा कैश्चिद् राजभिर्दिनानां विंशतिं यावत्, तथा अन्यैस्तेषां दिनानां पञ्चविंशतिं तत्पञ्चविंशतिं यावत्, तथा अपरैर्मासं यावत्, अपरैर्मासद्वयं यावत्, अभयं जन्तूनां भयाभावो ददे। स्व-स्वदेशेषु तैः कथितदिनान् यावदमारिः प्रावर्त्ततेति भावः। दिनशब्दः पुंनपुंसके। 'अभय-मुशीरामील्योः' इत्यनेकार्थः ॥ ४०५-४०६

ततोऽमात्याय निर्दिष्टं पूज्या लाभपुरे पुरे।
तिष्ठन्तु मानसिंहास्तु सन्तु साकं मयाऽधुना ॥ ४०७
धर्मगोष्ठीं मिथः कर्तुं धर्तुं जीवदयाव्रतम्।
अनार्यमार्यतां नेतुं देशं तीर्थनिवेशनात् ॥ ४०८ – युग्मम्।

**व्याख्या**—ततोऽनन्तरम्, साहिना अमात्याय श्रीकर्मचन्द्राय, निर्दिष्टं कथितम्, यत्पूज्या **लाभपुरे** पुरे तिष्ठन्तु, **मानसिंहास्तु** मया साकं सार्धम्, अधुना इदानीं सन्तु। किं कर्तुम्? मिथः परस्परम्, धर्मगोष्ठीं धर्मसंलापं कर्तुम्, तथा जीवदयाव्रतं धर्तुं धारयितुम्, तथा अनार्यं देशं तीर्थनिवेशनात् तीर्थस्थापनादुपलक्षणाद् गोरक्षणाच्च आर्यतां नेतुं प्रापयितुम्—अनार्यमार्यं कर्तुमित्यर्थः ॥ ४०७-४०८

तथेत्युक्त्वा समं मन्त्री साहिनाऽचालयत्तराम्।
मानसिंहान् निराबाधसंयमान् डुङ्गरान्वितान् ॥ ४०९

**व्याख्या**—मन्त्री श्रीकर्मचन्द्रः, तथेत्यभ्युपगमे, साह्युक्तं तथेत्युक्त्वा, अभ्युपगम्येत्यर्थः। साहिना समं **मानसिंहान्** वाचनाचार्यश्री**महिमराजान्**, अचाल्यत्तरामतिशयेन चाल्यति स्म। 'सहयुक्तेऽप्रधाने' इति सहार्थेन युक्तेऽप्रधाने तृतीया स्यात्। किम्भूतान् मानसिंहान्? निराबाधो दोषैरदुष्टः संयमश्चारित्रं येषां ते निराबाधसंयमास्तान्, तथा **डुङ्गरो हर्ष-विशालर्षि**स्तेन अन्वितान् सहितान् डुङ्गरान्वितान्। लोकप्रसिद्धत्वाच्छेदोपस्थापनीयदीक्षानाम परित्यज्य **मानसिंह-डुङ्गरेति** स्वगृहनाम न्यस्तवान् कविः ॥ ४०९

साहिनिर्दिष्टसावद्यव्यापारपरिशीलनात्।
मुनीनां मा व्रताचारविलोपो भवतादिति ॥ ४१०
विभाव्य मन्त्रतन्त्रादिनिपुणं दत्तवान् समम्।
पञ्चाननं महात्मानं विनेयं मेघमालिनः ॥ ४११ – युग्मम्।

**व्याख्या**—साहिना निर्दिष्टाः कथिता ये सावद्यव्यापाराः सारम्भक्रियाः, तेषां परिशीलनात् निषेवणात्, मुनीनां साधूनाम्, मेति प्रतिषेधेऽव्ययम्, मा व्रताचारविलोपो नियमाचरणविध्वंसो भवतादिति विभाव्य विचार्य, मन्त्रो देवादिसाधनम्, महाबीजादि तन्त्रम्, अगदस्त आदौ येषां ज्योतिष्कादीनां ते मन्त्रतन्त्रादयस्तेषु निपुणं दक्षं **मेघमालिनस्तद्गुरोर्विनेयं** शिष्यं **पञ्चाननं** महात्मानं महाशयम्, श्रीमानसिंहैः समं दत्तवान् ददौ।

'तन्त्रं सिद्धान्ते राष्ट्रे च परच्छन्दप्रधानयोः । अगदे कुटुम्बकृत्ये तन्तुवाने परिच्छदे ॥
श्रुतिशाखान्तरे शास्त्रे करणे द्व्यर्थसाधके । इतिकर्तव्यतातन्त्वोः' – इत्यनेकार्थः ।

अगदे भेषजे यथा – 'मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम्' ॥ ४१० – ४११

**वासोगृहं तथाऽऽत्मीयान् भटान् साधूनुपासकान् ।**
**गुरुभक्तिचिकीः सार्थे सद्युक्त्याऽयोजयत्तराम् ॥ ४१२**

**व्याख्या** – गुरुभक्तिं गुरुसेवां कर्तुमिच्छतीति गुरुभक्तिचिकीः श्रीमन्त्रिराजः, सार्थे श्रीमानसिंहैः समम्, सद् युक्त्या शोभनयोजनेन, वासोगृहं पटमन्दिरम्, तथा आत्मीयान् भटान् योधान्, तथा साधूनुपासकान् श्राद्धान्, अयोजयत्तरां विशेषेण नियुक्तवान् दत्तवानित्यर्थः ॥ ४१२

**निरवद्यान्नपानादिव्यवस्थाया विधानतः ।**
**तथाऽकार्षीन्महामात्यो यथा धर्मः समैधत ॥ ४१३**

**व्याख्या** – महामात्यो निर्वद्यानां निर्दोषाणामन्नपानादीनां या व्यवस्था मर्यादा, तस्या विधानतः करणतः, तथा अकार्षीद् यथा धर्मः साधुधर्मः समैधत अवर्धत ॥ ४१३

**स्वयं तु साहिवाक्येन रोहितासपुरे स्थितः ।**
**अवरोधस्य रक्षायै विश्वासास्पदमीशितुः ॥ ४१४**

**व्याख्या** – स्वयं स्वात्मना मन्त्री, साहिवाक्येन रोहितासपुरे स्थितः । कस्यै ? अवरोधस्य अन्तःपुरस्य रक्षायै । किम्भूतो मन्त्री ? ईशितुः स्वामिनः साहेर्विश्वासास्पदं विस्रम्भाश्रयः, अत एव अवरोधरक्षणे नियुक्तवान् श्रीसाहिः ॥ ४१४

**सेतुबन्धं सृजन् सिन्धौ युक्तो वा नरकोटिभिः ।**
**सुमित्राङ्गजयुक् साहिः श्रीराम इह लक्ष्यते ॥ ४१५**

**व्याख्या** – साहिरिह कश्मीरमार्गे, सिन्धौ नद्यां सेतुबन्धं पालिबन्धं सृजन् कुर्वन्, वाशब्द उपमानार्थः । श्रीराम इव श्रीदाशरथिरिव लक्ष्यते ज्ञायते । किम्भूतः ? नराणां कोटिभिर्युक्तः सहितः, तथा सुमित्राणि शोभनसुहृदोऽङ्गजाश्च पुत्रास्तान् युनक्तीति सुमित्राङ्गजयुक् । श्रीरामोऽपि सिन्धौ समुद्रे सेतुबन्धमसृजत्, तथा वानराणां हनूमदादीनां कोटिभिर्युक्तः, तथा सुमित्राया अङ्गजो लक्ष्मणस्तं युनक्तीति सुमित्राङ्गजयुग् – लक्ष्मणसहितो भवतीत्यर्थः । 'लक्षीण् दर्शनाङ्कनयोः' ।

'ज्ञाने मनुते बोधत्यवधरति च बुध्यतेऽवधारयति । अवयाति चाऽवगच्छत्यवैति लक्षयति वेत्ति जानाति ॥
ज्ञानार्था दर्शनार्थाश्च सन्ति ये केऽपि धातवः । ते वहन्ति यथौचित्यमविभेदं परस्परम् ॥'

इत्युक्तेर्दर्शनार्थोऽप्ययं धातुर्ज्ञानार्थत्वेन दर्शितः । 'सिन्धुर्नद्यां गजमदेऽब्धौ देशेऽनङ्गभेदयोः ।' इत्यनेकार्थः ॥ ४१५

**कश्मीरांस्तत्क्षणादेव रामो लङ्कामिवाग्रहीत् ।**
**प्रजाप्रीतिविधानाय श्रीसाहिर्विहितोद्यमः ॥ ४१६**

**व्याख्या** – तत्क्षणादेव कश्मीरप्राप्त्यवसर एव, प्रजायाः प्रीतिविधानाय आनन्दकरणाय, विहितोद्यमः कृतोत्साहः, श्रीसाहिः कश्मीरान् अग्रहीज्जग्राह । कः कामिव ? रामो लङ्कामिव – यथा रामो लङ्कां तत्क्षणादेव जग्राह तथाऽयमपि ॥ ४१६

**चित्रं रामोऽवधीद् बाणै रावणं निजपाणिना ।**
**साहिना तु कृताधर्मो न हतो निहतोंऽहसा ॥ ४१७**

**व्याख्या** – रामो दाशरथिः, निजपाणिना स्वहस्तेन, बाणैः कृत्वा रावणमवधीज्जघान । तु विशेषे, अयं विशेषः – साहिना श्रीअकबरेण कृतोऽधर्मोऽन्यायप्रवृत्तिर्येन स कृताधर्मो नृपतिः, न हतः शस्त्रेण न मारितः, किन्त्वंहसा स्वपापेन निहतः । चित्रमाश्चर्यमेतद् रामेण बाणेन रावणो हतः, अनेन तु बाणेन अहतोऽप्यंहसा हत इति लोके विस्मयोऽभवदित्यर्थः ॥ ४१७

**श्रीसाहिनेत्रपीयूषस्पर्शनादमरो भवन् ।**
**स्वामिद्रोही निषेध्योऽयं मत्वेति विधिना हतः ॥ ४१८**

**व्याख्या**—अयं स्वामिने साहये द्रुह्यतीत्येवंशीलः स्वामिद्रोही, श्रीसाहिनेत्रयोर्यत्पीयूषममृतं तस्य स्पर्शनादमरोऽवध्यो भवन् निषेध्यो वार्य इति मत्वा अवबुध्य, विधिना दैवेन हतः । साहिनेत्रपीयूषस्य स्पर्शनेन यदाऽसावमरो भवति तदा वध्यो न भवति, अयं च वध्यः स्वामिद्रोहित्वात्, ततश्च साहिदृष्टिसुधावृष्टियोगात् तस्यामरत्वं भवन् निषेध्य विधिना पूर्वमेव निजघ्ने । न म्रियत इत्यमरः । अमरशब्दश्चिरस्थायित्वादिलक्षणया दैवेषु यौगिको रूढश्च । पीयूषस्पर्शने ह्यमरो देवो भवतीति च्छायार्थः । साहिदृष्टौ हि न कोऽपि गवादिर्म्रियते, अयं पुनर्मानवः कथं म्रियतामिति विमृश्य विधिना साहेरदर्शन एव मारित इति भावार्थः ॥ ४१८

पुनरप्यत्रैव हेत्वन्तरमाह—

**तथात्वे वा निजा सृष्टिः कृतनाशाकृतागमात् ।**
**निन्द्या मा भूदिति ध्वस्तो वैरी प्राग्विधिना किमु ? ॥ ४१९**

**व्याख्या**—वा अथवा, तथात्व इति कोऽर्थः ? यदि वैर्येवमेव रक्ष्यते, साहिनाऽपि न मार्यते कृपालुत्वात्, मयाऽपि न हन्यते, तदा निजा सृष्टिर्निर्माणम्, कृतस्य पापस्य नाशोऽकृतस्य पुण्यस्याऽऽगमस्तस्मान्निन्द्या कुत्सनीया भवेत्, सा निन्द्या मा भूत्, माऽस्तु इति हेतोर्वैरी, विधिना प्राक् साहेरागमनात् पूर्वमेव, किमु इति वितर्के, ध्वस्तो हतः । तथा च तद्विनाशे सृष्टौ कृतनाशोऽपि न भवत्यकृतस्य आगमोऽपि न स्यात्, ततश्च निन्द्यत्वमपि सृष्टेर्न । माङ्योगे अद्यतन्या अप्याशीः-प्रेरणार्थता वक्तव्या ॥ ४१९

**नेत्रक्षीराम्बुधौ साहेरथवा स्तः सुधा विषम् ।**
**सुमनोभिः सुधा दध्रे विषमास्त्रद्विषा विषम् ॥ ४२०**

**व्याख्या**—अथवाशब्द उपायस्मरणगर्भितपक्षान्तरद्योतकः । साहेरकबरस्य नेत्रक्षीराम्बुधौ दृष्टिक्षीरसमुद्रे, सुधाऽमृतं विषं च क्ष्वेडश्चेत्यभ्याह्रियते स्तो विद्येते । तत्र सुमनोभिः प्राज्ञैः, सुधा पीयूषं दध्रे धृतम् । विषमाण्युग्राण्यस्त्राणि यस्यैवंविधो यो द्विड् वैरी तेन विषमास्त्रद्विषा विषं दध्रे । अत एव साहिदृष्ट्या स ममारेति भावः । क्षीराम्बुधौ हि सुधा सुमनोभिर्देवैर्दध्रे, विषमास्त्रः कामस्तस्य द्विषेश्वरेण विषं कण्ठे दध्र इति च्छायार्थः । 'सुमनाः प्राज्ञदेवयोः' इत्यनेकार्थः ॥ ४२०

**सुधैवास्त्यथवा नेत्रे सा शत्रौ तु विषायते ।**
**सिताऽपि जायते येन कटुका पित्तदोषतः ॥ ४२१**

**व्याख्या**—अथवेति पक्षान्तरे, साहिनेत्रे सुधैव अस्ति । सा सुधा शत्रौ तु वैरिणि तु विषमिव आचरति विषायते विषीभवतीत्यर्थः । एतदेव दृष्टान्तद्वारा द्रढयन्नाह—येन कारणेन सिताऽपि शर्कराऽपि, पित्तदोषतः पित्तवैगुण्यात्, कटुका क्षारा जायते । सिता हि मधुरा भवति परं पित्तयोगे सा कटुका सम्पद्यते । तथा साहिदृष्टौ सुधैव आस्ते परं विद्विषो विषमिवाऽभवत् ॥ ४२१

**देवा एव मनःशस्त्रा इति गीरनृतीकृता ।**
**नराधीशोऽपि यज्जातो मनोऽस्त्रः साहिरात्मना ॥ ४२२**

**व्याख्या**—येन साहिना, देवा एव मन एव शस्त्रं येषां ते मनःशस्त्रा इति गीः—वाणी अनृतीकृता असत्यीकृता । यद् यस्माद्धेतोः, नराधीशोऽपि साहिरात्मना स्वयं मनोऽस्त्रो जातः । मनसा व्यचिन्ति । यदसौ दूरीभवतु तावतैव वैरिघातो जात इति । देवा एव मनोऽस्त्रा इतिवाक्यमप्रमाणितमित्यर्थः ॥ ४२२

**एवं दिग्विजयं कृत्वा जित्वा वैरिकुलं बलात् ।**
**श्रीमल्लाभपुरे पौरकृतशोभेऽविशत् प्रभुः ॥ ४२३**

**व्याख्या**—एवममुना प्रकारेण, दिग्विजयं कृत्वा विधाय, तथा बलाद् हठाद्, वैरिकुलं शत्रुवृन्दं जित्वा, श्रीमल्लाभपुरे प्रभुः साहिरविशत् प्रविवेश। किम्भूते? पौरैर्नागरिकैः कृता शोभा तोरणादिलक्षणा यस्मिन् तत् तस्मिन् पौरकृतशोभे। बलाद्धठार्थेऽव्ययम् ॥ ४२३

**गुरवोऽपि समाजग्मुः सम्मुखं विबुधान्विताः।**
**दत्ताशिषा प्रभोः प्रीतिं जनयन्तः पदे पदे ॥ ४२४**

**व्याख्या**—गुरवोऽपि श्रीजिनचन्द्रसूरयः, विबुधैः पण्डितैः श्रीजयसोम-गुणविनय-रत्ननिधान-समयसुन्दराद्यैरन्विताः सहिताः, सम्मुखमभिमुखं समाजग्मुः समेताः। किं कुर्वन्तो गुरवः? दत्ता या आशीर्धर्मलाभेतिलक्षणा तया दत्ताशिषा, पदे पदे स्थाने स्थाने प्रीतिमानन्दं जनयन्त उत्पादयन्तः ॥ ४२४

**अन्यदा साहिना धर्मगोष्ठीव्यतिकरे मुदा।**
**वादिता गुरवो नूनं जिनचन्द्रयतीश्वराः ॥ ४२५**

**व्याख्या**—अन्यदाऽन्यस्मिन्नवसरे, साहिनाऽकब्बरेण, धर्मगोष्ठ्या धर्मसंलापस्य यो व्यतिकरो व्यतिकीर्णता तस्मिन् धर्मगोष्ठीव्यतिकरे धर्मगोष्ठीप्रस्ताव इत्यर्थः। मुदा हर्षेण, नूनं निश्चितं जिनचन्द्रयतीश्वरा गुरवो वादिताः शब्दिताः ॥ ४२५

**तेनोक्तं दर्शनं क्वापि युष्मद्दर्शनसन्निभम्।**
**निभनिर्मुक्तमायुक्तं नैवास्माभिर्निरीक्षितम् ॥ ४२६**

**व्याख्या**—तेन साहिनोक्तम्—हे गुरो! युष्माकं दर्शनं धर्मस्तत्सन्निभं तत्सदृशं दर्शनं धर्मः क्वापि जगति नैव निरीक्षितमवलोकितम्। किम्भूतं दर्शनम्? निभं व्याजस्तेन निर्मुक्तं रहितं निभनिर्मुक्तम्। पुनः किम्भूतम्? आयुक्तमहिंसायां व्यापृतम्। 'दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोः। स्वप्नलोचनयोश्च'—इत्यनेकार्थः ॥ ४२६

**मानसिंहः सहास्माभिर्निरुपानत्कपादगः।**
**यां व्यथां सुमनाः सेहे तां को वक्तुमपि प्रभुः? ॥ ४२७**

**व्याख्या**—हे गुरो! अस्माभिः सह मानसिंहः सुमनाः प्राज्ञः, निरुपानत्काभ्यां पादत्राणरहिताभ्यां पादाभ्यां गच्छतीति निरुपानत्कपादगः, यां व्यथां पीडां सेहे ममर्ष, तां व्यथां वक्तुमपि कथयितुमपि, कः प्रभुः कः समर्थः? ॥ ४२७

**अस्माभिर्बहुधोक्तोऽपि निजाचारचिकीर्षया।**
**योऽङ्गीकृतनिजाचारप्रतिज्ञां नात्यवाहयत् ॥ ४२८**

**व्याख्या**—हे गुरो! अस्माभिर्बहुधा बहुभिः प्रकारैरुक्तोऽपि भणितोऽपि, निजाचारस्य आत्मीयचरित्रस्य, अङ्गीकृता स्वीकृता या प्रतिज्ञा सङ्गरोऽभ्युपगमस्तां न अत्यवाहयत् न अतिचक्रमे। कया? निजाचारचिकीर्षया आत्मीयधर्मानुष्ठानपालनेच्छया ॥ ४२८

**काश्मीरं वर्त्म यः शैलशिलाशकलसङ्कुलम्।**
**पद्भ्यामेवातिचक्रमे गम्यं यन्न मनोरथैः ॥ ४२९**

**व्याख्या**—हे गुरो! यो मानसिंहः कश्मीराणामिदं काश्मीरं वर्त्म मार्गम्, पद्भ्यां चरणाभ्यामेव अतिचक्रमे लङ्घयति स्म। किम्भूतं वर्त्म? शैलस्य गिरेर्यानि शिलाशकलान्युपलखण्डानि तैः सङ्कुलं व्याप्तम्। पुनः किम्भूतम्? यन्मनोरथैराशाभिर्न गम्यं न लङ्घ्यम्। यत्र रथैरपि न गन्तुं शक्यते तत्र अनेन गतमिति च्छायार्थः ॥ ४२९

**क्रियातुष्टैरतोऽस्माभिर्निरीहस्यान्यवस्तुनि।**
**कश्मीरेषु ददे मीनाभयदानं समीहितम् ॥ ४३०**

**व्याख्या**—हे गुरो! अतो हेतोरस्माभिः, क्रिया साध्वाचारस्तया तुष्टैर्हृष्टैः, अन्यवस्तुनि पक्ष्मवस्त्रादौ निरीहस्य निःस्पृहस्य अस्य श्रीमानसिंहस्य, कश्मीरेषु समीहितमेतदिष्टं मीनाभयदानं मीनानां मत्स्यानामभयदानं ददे दत्तम्। कश्मीरेषु सरोमत्स्या एतदुक्त्या अस्माभी रक्षिता इत्यर्थः ॥ ४३०

अतोऽस्मदाशयाह्लादहेतवेऽतिविशारदः ।
स्वपट्टे मानसिंहाह्वः स्थाप्यो युष्माभिरादृतैः ॥ ४३१

**व्याख्या** – हे गुरो ! अतो हेतोः, अस्मदाशयस्य अस्मच्चेतस आह्लादहेतवे आनन्दनिमित्तम्, युष्माभिः श्रीपूज्यैरादृतैः सादरैः, अतिविशारदोऽतिशयेन विद्वान् मानसिंहाह्वो मानसिंहनामा स्वपट्टे स्थाप्यः ॥ ४३१

पूज्यैरुक्तमिदं युक्तमुक्तं श्रीपातिसाहिना ।
इष्टं वैद्योपदिष्टं चेत्याख्यातं सत्यतां गतम् ॥ ४३२

**व्याख्या** – पूज्यैरुक्तमिदं श्रीपातिसाहिना युक्तं न्याय्यमुक्तम् । इष्टं मनोऽभिलषितं दुग्धपानादि वैद्येनाऽप्युपदिष्टं कथितं वैद्योपदिष्टं चेत्याख्यातं कथितम्, सत्यतां नीतं तथ्यीकृतमित्यर्थः । अस्माकमेतदिष्टमासीत् श्रीपातिसाहिनाऽप्युक्तम्, ततः पयसि शर्कराक्षेप इव, पाशितेरङ्गितमिव, शिशयिषोः शय्यालाभ इव, पिपासोः पीयूषपानमिव, क्षुधितस्य भोज्यप्राप्तिरिवेत्यादि बहूक्तं गुरुभिः ॥ ४३२

साहिना धीसखः प्रोचे मन्त्रिन् ! श्रीसूरिमन्त्रिणाम् ।
वदोत्कृष्टाभिधानं किं विधेयं जैनदर्शने ॥ ४३३

**व्याख्या** – ततः साहिना धीसखो मन्त्री प्रोचे प्रोक्तः – हे मन्त्रिन् ! श्रीसूरिमन्त्रिणामुत्कृष्टाभिधानं प्रकृष्टं नाम जैनदर्शने जैनधर्मे किं विधेयम् ? किमिति प्रश्ने, त्वं वद ब्रूहि ॥ ४३३

अथाऽऽख्याद्धीसखः स्वामिन् ! प्रसिद्धं जिनशासने ।
अस्मद्गच्छेऽपि नामास्ति पुरा हि विबुधार्पितम् ॥ ४३४

**व्याख्या** – अथ साहिकथनानन्तरं धीसखो मन्त्र्याख्यात् अचीकथत् – हे स्वामिन् ! प्रभो ! जिनशासने प्रसिद्धं विख्यातमस्मद्गच्छेऽपि श्रीखरतरगच्छेऽपि, पुरा पूर्वम्, हि स्फुटम्, विबुधैर्देवैरर्पितं दत्तं नाम आख्या, अस्ति विद्यते ॥ ४३४

किं नाम कथमाख्यातं केन कस्य गुरोरिति ।
साहिनोक्ते च वृत्तान्तं सचिवः स्माऽऽह मूलतः ॥ ४३५

**व्याख्या** – किं नाम विद्यते ?, कथं केन प्रकारेण आख्यातं कथितम्, केन देवेन, कस्य गुरोरिति साहिनोक्ते च सति, सचिवो मन्त्री, मूलत आदितः, आह स्म अब्रवीत् ॥ ४३५

देवेन नागदेवस्योपासितेनाष्टमादिना ।
युगप्रधानताव्यक्त्यै साक्षादिति विबोधितम् ॥ ४३६

**व्याख्या** – अष्टमादिनाऽष्टम इत्युपवासत्रयस्य संज्ञा । आदिग्रहाद् गन्धधूपदीपाद्युपासनोपायस्वीकारः । उपासितेन प्रसादितेन देवेन, नागदेवस्य श्रावकस्य, युगप्रधानताव्यक्त्यै – युगशब्देन वर्तमानकालो भण्यते, तस्मिंश्च यः प्रधानः सर्वोत्तमः स युगप्रधानस्तद्भावो युगप्रधानता, तस्या या व्यक्तिः प्रकटनं तस्यै – युगप्रधानत्वपरिज्ञानाय, साक्षात् प्रत्यक्षमिति वक्ष्यमाणं विबोधितं ज्ञापितम् । 'साक्षात्प्रत्यक्षतुल्ययोः' – इत्यनेकार्थः ॥ ४३६

त्वत्करे योऽक्षरश्रेणीं गुरुः प्रादुष्करिष्यति ।
अपाकरिष्यति स वै ज्ञेयो युगवरागमः ॥ ४३७

**व्याख्या** – हे नागदेव ! त्वत्करे त्वत्पाणौ, यो गुरुरक्षरश्रेणीं वर्णावलिम्, प्रादुष्करिष्यति प्रकटीकरिष्यति । अपाकरिष्यति च, चेत्यध्याह्रियते । स गुरुः, वै विशेषेऽव्ययम्, विशेषेण, युगवरागमः – युगे वर्तमानकाले वराः प्रधाना आगमाः शास्त्राणि परिच्छेद्यतया यस्य स युगवरागमः – तत्कालवर्तमानशास्त्रपरिच्छेत्ता युगप्रधान इत्यर्थः । पुरा श्रीगिरिनारगिरौ नागदेवश्राद्धेन श्रीअम्बिका आराधिता । हस्ते 'दासानुदासा इव सर्वदेवाः' अयं श्लोको लिखितः । य एनं वाचयति स युगप्रधानः । ततो जिनदत्तसूरिभिर्वासक्षेपं कृत्वा वाचितः । ततो युगप्रधाननिर्णयो जज्ञे ॥ ४३७

एतदेव कविराह –

**आविर्भाव-तिरोभावौ विहितौ वर्णसन्ततेः।**
**वीक्ष्य निर्धारितं श्रीमज्जिनदत्ते तदुत्तमम् ॥ ४३८**

**व्याख्या** – **नागदेवेन** वर्णसन्ततेर्देवतालिखिताक्षरश्रेणेः, आविर्भावः प्रकटीभावः, तिरोभावोऽदृश्यीभवनम् – तावाविर्भावतिरोभावौ, विहितौ श्री**जिनदत्त**सूरिणा कृतौ, वीक्ष्य विलोक्य, श्रीजिनदत्ते श्रीजिनदत्तसूरौ, तद्युगप्रधानत्वमुत्तममुत्कृष्टं निर्धारितं निर्णीतम् ॥ ४३८

**श्रुत्वेति विस्मितः स्माऽऽह जहाङ्गीरजलालदीः।**
**तदाम्नायभुवामेषां मया नाम तदर्पितम् ॥ ४३९**

**व्याख्या** – इति पूर्वोक्तं श्रुत्वा, विस्मितो विस्मयोपेत आश्चर्यभाग्, **जहाङ्गीरजलालदीः**, आह स्म अब्रवीत्। तर्हि भो मन्त्रिन्! एषां श्री**जिनचन्द्र**सूरीणां तेषां श्री**जिनदत्त**सूरीणां य आम्नाया उपदेशास्तेषां भूः स्थानं ये ते तदाम्नायभुवस्तेषां तदाम्नायभुवाम्, मया तद्युगप्रधानेति नाम अर्पितं दत्तम्। 'आम्नायः कुल आगमे उपदेशे च' – इत्यनेका**र्थः**। उपदेशे यथा – 'निराम्नायो मन्त्रः स्फुरति न हि कस्यापि नियतम्।' जहाङ्गीरेति पदं देवताकृतसान्निध्यवत्त्वसूचकं यवनशास्त्रप्रसिद्धम् ॥ ४३९

**जिनसिंहसूरिरेवं नाम देयं सदर्थकम्।**
**मानसिंहस्य शक्त्येति सिंहतुल्यस्य सर्वथा ॥ ४४०**

**व्याख्या** – हे मन्त्रिन्! **मानसिंहस्य**, सर्वथा सर्वप्रकारेण, शक्त्या बलेन, सिंहतुल्यस्य सिंहसमस्य, एवमितीवार्थेऽव्ययम्, यथा श्री**जिनचन्द्र**सूरेर्युगप्रधान इति नाम दत्तं तथा **जिनसिंह**सूरिरिति सदर्थकमन्वर्थं सत्यार्थमिति यावन्नाम देयम्। एवमिति प्रकृतपरामर्शप्रकारे वाऽर्थोपदेशनिर्देशनिश्चयाङ्गीकारेषु। इवार्थे – अग्निरेवं विप्रः ॥ ४४०

**इति सामन्तचक्रेण तसलीमपुरस्सरम्।**
**मन्त्रिणाऽपि प्रभोर्वाक्यं मौलौ मालामिवाऽऽददे ॥ ४४१**

**व्याख्या** – प्रभोः साहेरिति वाक्यम्, सामन्तास्त्रिचतुरदेशाधिपतयस्तेषां यच्चक्रं समूहस्तेन सामन्तचक्रेण, तथा मन्त्रिणा अपि, अपिशब्दः समुच्चये, तसलीमपुरस्सरं तसलीमेति यवनभाषया दक्षिणपाणिशिरःसंयोगपूर्विका विनयप्रतिपत्तिः, तत्पुरस्सरं तत्पूर्वकम्, मौलौ शिरसि, मालामिव कुसुमस्रजमिव, आददे स्वीचक्रे। यथा मौलौ माला स्वीक्रियते तथा सर्वैरपि तत्साहिवाक्यं स्वीकृतमित्यर्थः ॥ ४४१

अथ साहिदत्तं पदद्वयमेकेनैव वृत्तेन कविराह –

**युगप्रधानतैतेभ्यो दत्ताऽथाऽऽचार्यता पुनः।**
**मानसिंहस्य सद्बुद्धेरस्माभिरधुना ततः ॥ ४४२**
**सन्मुहूर्त्ते महामात्य! त्वयाऽपि जनसाक्षिकी।**
**कर्तव्येयं प्रवृत्तिः स्वशास्त्ररीत्या विचक्षण! ॥ ४४३ – युग्मम्।**

**व्याख्या** – हे विचक्षण! विद्वन्! महामात्य! अस्माभिरधुना साम्प्रतम्, एतेभ्यः श्री**जिनचन्द्र**सूरिभ्यः, युगप्रधानता दत्ता। अथाऽनन्तरं सद्बुद्धेः कुशाग्रीयमते**र्मानसिंह**स्य, पुनराचार्यता दत्ता आचार्यपदं ददे। ततस्तस्माद्धेतोः, सन्मुहूर्त्ते शोभनघटिकाद्वयरूपे, त्वयाऽपि जनसाक्षिकी सकललोकप्रत्यक्षा इयं प्रवृत्तिर्युगप्रधानत्वाचार्यत्वयोर्वार्ता, स्वशास्त्ररीत्या आत्मीयजैनागममर्यादया, कर्तव्या विधेया। 'रीतिस्तु पित्तले वैदर्भ्यादौ लोहकिट्टे सीमनि' इत्यादि। यथा भवतां शासने पदव्याः प्रदानं पूर्वं पूर्वजैश्चक्रे तथा भवताऽपि विधेयमिति भावः ॥ ४४२ – ४४३

**इत्युक्ते साहिना मन्त्री वदति स्मेति कोविदः ।**
**अमारिघोषणा कार्या कार्येऽस्मिन् धर्मवृद्धये ॥ ४४४**

**व्याख्या**– साहिनेति पूर्वोक्त उक्ते कथिते सति, कोविदो विचक्षणो मन्त्री श्री**कर्मचन्द्रः**, इति वदति स्म अब्रवीत् । इतीति किम्? हे प्रभो! अस्मिन् कार्ये पदवीदानलक्षणे, धर्मवृद्धये सुकृतपुष्ट्या अमारिघोषणा कार्या विधेया ॥ ४४४

**सुखकृद्धर्मकृत्यं स्यात् किं पुनः कृपया युतम् ।**
**क्षीरं स्वादु भवेदेव सितायाः सङ्गतौ किमु ॥ ४४५**

**व्याख्या**– हे प्रभो! धर्मकृत्यं धर्मकार्यं सुखकृत् सुखकारि स्यात्, किं पुनः कृपया करुणया युतमन्वितम्? यतः क्षीरं दुग्धं स्वादु मृष्टं भवेदेव स्यादेव, किमु किं सितायाः शर्करायाः सङ्गतौ संयोगे सितसंयोगे किं वाच्यमित्यर्थः ॥ ४४५

**ततः श्रीस्तम्भतीर्थीययादोनायकयादसाम् ।**
**आवर्षं त्याजिता हिंसा साहिना दीर्घदर्शिना ॥ ४४६**

**व्याख्या**– ततो मन्त्रिकथनानन्तरम्, साहिना श्री**स्तम्भतीर्थी**यानि श्रीस्तम्भतीर्थे जातानि, यानि यादोनायक-यादांसि = लवणाब्धिमत्स्यास्तेषाम्, आवर्षं – वर्षम् आ मर्यादीकृत्य – आवर्षम्, हिंसा त्याजिता दूरीकारिता । किंभूतेन साहिना? दीर्घदर्शिना सुपर्यालोचितपरिणामसुन्दरकार्यकारिणा । स्तम्भतीर्थीयेति 'वृद्धाच्छः' इति छः शेषेऽर्थे ॥ ४४६

**दिनमेकमिहाप्यस्तु जीवरक्षासमन्वितम् ।**
**प्रार्थनाभङ्गकारित्वं शिक्षितं न मनस्विभिः ॥ ४४७**

**व्याख्या**– पुनर्मन्त्रिणा लाभपुरेऽप्येकं दिनममारिः पाल्यतामित्युक्ते सति, इहापि लाभपुरेऽपि, जीवरक्षासमन्वितं दयासमेतं दिनमेकमस्तु । लाभपुरेऽपि दिनमेकं जीवहिंसा वार्यतामिति साहिना स्वीकृतम् । यतो मनस्विभिः प्रशस्तमनोभिः, प्रार्थनाया याचनायाः, भङ्गकारित्वं भङ्गकरणशीलत्वम्, न शिक्षितं नाभ्यस्तम् । ते मनस्विनः प्रार्थितमवश्यं कुर्वन्त्यतः साहिरिदमपि मन्त्र्युक्तं स्वीचकारेति भावः ।



'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायिनि । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥'

भूमनि गोमान्, निन्दायां ककुद्मती कन्या, प्रशंसायां मनस्वी, नित्ययोगे सानुमान् गिरिः, अतिशायिनि स्तनकेश-वती स्त्री, संसर्गे दण्डी, अस्तिमान् सम्पन्न इत्यर्थः । इत्युक्तेरत्र प्रशंसायां विनिः ॥ ४४७

**आतोद्यानि सुहृद्यानि साहिना महवासरे ।**
**वितीर्णानि स्वकीयानि पुण्यवृद्ध्यै पुनस्तदा ॥ ४४८**

**व्याख्या**– पुनर्भूयः, तदा महवासर उत्सवदिने, साहिना श्री**अकबरेण**, स्वकीयानि सुहृद्यानि – अतिशयेन मनोह-राण्यातोद्यानि वादित्राणि, पुण्यवृद्ध्यै सुकृतपुष्टये, वितीर्णानि दत्तानि ॥ ४४८

**ततश्च सचिवः स्वामिधर्मधौरेयताधरः ।**
**श्रीरायसिंहभूपालपादजाहं समागमत् ॥ ४४९**

**व्याख्या**– ततश्च साहिकथनानन्तरम्, सचिवो मन्त्री, स्वामिनो धर्मो येषां ते स्वामिधर्माणस्तेषां मध्ये धौरेयो धुर्यो मुख्य इत्यर्थः, स्वामिधर्मधौरेयस्तद्भावः स्वामिधर्मधौरेयता, तां धरति बिभर्तीति स्वामिधर्मधौरेयताधरः । 'धुरो यड्ढकौ' इति ढक् । प्रधानस्वामिधर्मेत्यर्थः । अत एव श्री**रायसिंह**भूपालस्य पादजाहं पादमूलम्, समागमदागतः । 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' इति कर्णादेर्जाहच् मूलेऽर्थे पादस्य मूलं पादजाहम् ॥ ४४९

**सर्वं वृत्तान्तमाख्याय साह्युक्तं साहसाग्रणीः ।**
**प्राप्य सैंहं महादेशं सिंहः प्रक्षरितोऽभवत् ॥ ४५०**

**व्याख्या**– साहसं दुष्करकर्म तेनाग्रणीर्मुख्यः साहसाग्रणीः, सर्वं साहिनोक्तं साह्युक्तं वृत्तान्तं वार्तामाख्याय कथयित्वा, यथा श्री**जिनचन्द्र**सूरीणां साहिना युगप्रधान इति पदं दत्तम्, श्री**मानसिंहानां** श्री**जिनसिंह**सूरीति पदं दत्त-

मित्याद्युक्त्वा, सिंहस्य श्रीराजसिंहस्य अयं सैंहः, तं महादेशमुत्सवाज्ञां प्राप्य, इवेत्यध्याह्रियते । सिंहः प्रक्षरित इव अभवद् । यथा सिंहः प्रक्षरितोऽपरिभवनीयो भवति तथाऽयमपि श्रीराजसिंहाज्ञामाप्य द्विगुणितोत्साहोऽभूत् । राजसिंहनृपेणाप्युक्तं यथा त्वमेवोत्सवं विधेहीति ॥ ४५०

**ततः पौषधशालायामाहूय महिमाधनः ।**
**सङ्ग्रामसूनुः श्रीसङ्घं सामोदमिदमुक्तवान् ॥ ४५१**

**व्याख्या** – ततः श्रीराजसिंहादेशप्राप्त्यनन्तरम्, सङ्ग्रामसूनुः श्रीकर्मचन्द्रः, पौषधशालायां श्रीसङ्घमाहूय आकार्य, सामोदं सहर्षं यथा स्यात्तथा, इदं वक्ष्यमाणम्, उक्तवानूचिवान् । किंभूतः ? महिमैव माहात्म्यमेव धनं यस्यासौ महिमाधनः ॥ ४५१

**सर्वकार्यक्षमः सङ्घो यद्यप्यस्ति तथापि मे ।**
**एतन्महविधानाज्ञा प्रसद्याद्य प्रदीयताम् ॥ ४५२**

**व्याख्या** – सङ्घो यद्यपि सर्वकार्यक्षमः सकलकृत्यविधाने समर्थः, तथापि श्रीसङ्घेनैतस्य महस्य उत्सवस्य विधान आज्ञा आदेश एतन्महविधानाज्ञा, प्रसद्य अनुगृह्य, अद्य मे मम प्रदीयतां वितीर्यताम् ॥ ४५२

**ततः सङ्घः समर्थोऽपि हर्षपूरितमानसः ।**
**मत्वैतत्कृत्ययोग्यत्वमस्येति प्रत्यपद्यत ॥ ४५३**

**व्याख्या** – ततो मन्त्रिकथनानन्तरम्, समर्थोऽपि क्षमोऽपि सङ्घः, हर्षेण पूरितं भृतं मानसं चेतो यस्य स हर्षपूरितमानस एवंविधः सन्, अस्य श्रीकर्मचन्द्रस्य, एतस्मिन् कृत्ये बृहत्पदनन्दीकरणलक्षणे कार्ये, योग्यत्वमौचित्यं मत्वा ज्ञात्वेति मन्त्र्युक्तं प्रत्यपद्यत स्वीचक्रे ॥ ४५३



**निशाजागरनिर्माणहेतवे प्रतिमन्दिरम् ।**
**साधर्मिकाणां मन्त्रीशस्ततः प्रेषितवानिति ॥ ४५४**
**सरङ्गमेकं नीरङ्गीवासः पूगफलानि च ।**
**सेरप्रमाणमत्स्यण्डीं सरसं पत्रबीटकम् ॥ ४५५ – युग्मम् ।**

**व्याख्या** – ततोऽनन्तरम्, मन्त्रीशः श्रीकर्मचन्द्रः, निशाजागरस्य रात्रिजागरस्य, निर्माणहेतवे विधानाय, साधर्मिकाणां समानधर्मणां श्राद्धानाम्, प्रतिमन्दिरं प्रतिगृहम्, इति वक्ष्यमाणं प्रेषितवान् मुमोच । तदेवाऽऽह – एकं सरङ्गं रङ्गो लौहित्यादिस्तत्सहितं नीरङ्गीवासः, लोकरूढ्या चूनडीति, च पुनः पूगफलानि क्रमुकफलानि, तथा सेरप्रमाणा या मत्स्यण्डी, फाणितं तद्विकृतिः पुनर्मत्स्यण्डी तस्य खण्डस्य विकारस्ताम् । यद् धन्वन्तरिः – 'शर्करोक्ता तु सीनाण्डी श्वेता मत्स्यण्डिका सिता' इति । 'मत्स्यण्डिका खण्डसिता क्रमेण गुणवत्तरा' इति वाग्भटः । तथा सरसं सस्वादं पत्रबीटकमहिवल्लीपत्रबीटकम् ॥ ४५४ – ४५५

**श्राविकाभिः समग्राभिरेकीभूय मनोहरैः ।**
**श्रीदेवगुरुसत्सङ्घगीतैर्जागरितं निशि ॥ ४५६**

**व्याख्या** – समग्राभिः समस्ताभिः, श्राविकाभिः एकीभूय–एकत्रस्थल ऐकमत्यं विधायेत्यर्थः । निशि रात्रौ, मनोहरैः रुचिरैः श्रीदेवगुरुसत्सङ्घानां सम्बन्धीनि यानि गीतानि गेयानि, तैर्जागरितं जागरणं कृतम् । रात्रिजागरो विहित इत्यर्थः ॥ ४५६

**शुक्लायां फाल्गुने मासे द्वितीयायां जयातिथौ ।**
**मध्याह्ने योगनक्षत्रलग्नशुद्धिसमन्विते ॥ ४५७**
**आहूतानेकगच्छीयोपासकव्रातसुन्दरे ।**
**वस्त्राभरणमुक्ताभिर्मण्डिते सदुपाश्रये ॥ ४५८**

साहिप्रसादसम्प्राप्तवाद्यवादनपूर्वकम् ।
अमारिघोषणातोद्ये वाद्यमाने मुहुर्मुहुः ॥ ४५९
चतुर्मुखोच्चविज्ञानिजनवृन्दविनिर्मिताम् ।
* दुकूलादर्शसौवर्णाभरणावलिभूषिताम् ॥ ४६०
नन्दीं विधाय सचैत्यचतुष्टयविराजिताम् ।
आगमोक्तविधानेन मानसिंहाय सादरम् ॥ ४६१
श्रीजैनचन्द्रसूरीन्द्रकराम्भोजनिवासिनीम् ।
आचार्यपदवीं मन्त्री दापयामास साहसी ॥ ४६२ – षड्भिः कुलकम् ।

**व्याख्या** – साहसं दुष्करकर्म अस्य अस्तीति साहसी, मन्त्री श्रीकर्मचन्द्रः, आगमोक्तविधानेन सिद्धान्तप्रतिपादितविधिना, सादरं यथा स्यात्तथा, **मानसिंहाय**, श्रीजिनचन्द्रसूरीणामिदं श्रीजैनचन्द्रसूरीन्द्रं यत् कराम्भोजं पाणिपद्मं तत्र निवसतीत्येवंशीला श्रीजैनचन्द्रसूरीन्द्रकराम्भोजनिवासिनी, तामाचार्यपदवीम्, दापयामास दापयति स्म। क? फाल्गुने मासे, शुक्लायां द्वितीयायां जयातिथौ, मध्याह्ने दिनयौवने; किंभूते मध्याह्ने ? योगः प्रीत्यादिः, नक्षत्रं पुष्यादिः, लग्नं राशीनामुदयस्तेषां या शुद्धिर्नैर्मल्यं तया समन्विते सहिते, शोभनयोगनक्षत्रलग्नयुक्त इत्यर्थः । पुनः क ? सदुपाश्रये **शङ्खवालगोत्रीयसाधुदेवा**कारितवसतौ; किंभूते ? आहूता आकारिताः, अनेकगच्छीया अनेकगच्छसम्बन्धिनो य उपासकव्राताः श्राद्धसमूहास्तैः सुन्दरे रम्ये। तथा वस्त्राणि मखमलादीनि, आभरणानि च, अलङ्कारा मुक्ताश्च मौक्तिकानि ताभिर्मण्डिते विभूषिते; कथम्?, साहिप्रसादेन **श्रीअकबरानुग्रहेण** सम्प्राप्तानि यानि वाद्यान्यातोद्यानि तेषां यद्वादनं शब्दनं तत्पूर्वकं साहिप्रसादसम्प्राप्तवाद्यवादनपूर्वकम्; पुनः क सति ? अमारिघोषणातोद्ये मुहुर्मुहुः पुनः पुनर्वाद्यमाने सति; किं कृत्वा ? नन्दीं श्रीजिनशासनप्रसिद्धां विधाय; किंभूतां नन्दीम्? चतुर्मुखा चासौ उच्चा चासौ तुङ्गा चासौ विज्ञानिजनवृन्देन शिल्पिलोकसमूहेन विनिर्मिता च रचिता ताम्; तथा दुकूलानि च क्षौमाणि, आदर्शाश्च मुकुराः, सौवर्णाभरणानि च हैमालङ्कारास्तेषां या आवलिः श्रेणिस्तया भूषितामलङ्कृताम्; पुनः किंभूताम्? सन्ति शोभनानि चैत्यानि जिनप्रतिमास्तेषां चतुष्टयेन विराजितां शोभमानाम् ॥ ४५७–४६२

जिनसिंहसूरिरिति [तद्]नाम न्यस्तं तिथौ द्वितीयायाम् ।
वृद्धिं यायात् तस्यामुदितस्येन्दोरिवैतदिति ॥ ४६३

**व्याख्या** – तस्यां शुक्लायां द्वितीयायाम्, उदितस्योद्गतस्येन्दोरिव चन्द्रस्येवैतन्नाम वृद्धिं यायादिति हेतोर्द्वितीयायां तिथौ, **जिनसिंहसूरि**रिति नाम न्यस्तं स्थापितम् ॥ ४६३

अनूचानपदानुज्ञां द्वयोः कारितवानिह ।
द्वयोस्तु वाचनाचार्यपदवीमप्यदापयत् ॥ ४६४

**व्याख्या** – इह नन्द्याम्, श्रीमन्त्रिराजः, द्वयोः कोविदयोरनूचानपदानुज्ञामुपाध्यायपदव्यनुज्ञां कारितवान् । द्वयोस्तु पण्डितयोर्वाचनाचार्यपदवीमदापयदपीति समुच्चये ॥ ४६४

तेषु च गणिजयसोमा रत्ननिधानाश्च पाठका विहिताः ।
गुणविनय-समयसुन्दरगणी कृतौ वाचनाचार्यौ ॥ ४६५

**व्याख्या** – तेषु चतुर्षु मध्ये, साङ्गे प्रवचनेऽधीती गणिरुच्यते। गणयश्च ते **जयसोमा**श्च गणिजयसोमा अस्मद्गुरवः, **ईर्याषट्त्रिंशिका – पौषधषट्त्रिंशिका – स्थापनाषट्त्रिंशिका**दिग्रन्थकर्तारः । चः समुच्चये । **रत्ननिधानाः** साङ्गहैमशब्दानुशासनाध्येतारस्ते पाठका विहिताः। गणिशब्द उभयथाऽपि योज्यः । तथा च **गुणविनय**गणिश्च **चम्पू – रघुवंश – खण्डप्रशस्ति – नेमिदूत – वैराग्यशतक – सम्बोधसप्ततिका**दिग्रन्थविवरणकर्ता; **समयसुन्दरगणिश्च** 'राजानो ददते सौख्यं' इत्येकपादस्य येन भूयांसोऽर्थाः प्रतिपादितास्तौ वाचनाचार्यौ कृतौ ॥ ४६५

नन्दीमहोत्सवं द्रष्टुं समायातानुपासकान् ।
आबालवृद्धलोकं च याचकानपि कामिताम् ॥ ४६६
सर्वेषामपि सौवर्णमुद्रां दातुमना अपि ।
रौप्यमुद्रैव माङ्गल्यहेतुरित्युदितो जनैः ॥ ४६७
कश्मीरजमिलच्चारुचन्दनाम्बुच्छटाद्भुतम् ।
रौप्यनाणकदानेन मानयामास मन्त्रवित् ॥ ४६८ – त्रिभिर्विशेषकम् ।

**व्याख्या** – मन्त्रवित् मन्त्रमालोचं वेत्तीति मन्त्रविन् मन्त्री श्रीकर्मचन्द्रः, नन्दीमहोत्सवं द्रष्टुं वीक्षितुं समायातान् समेतान्, उपासकान् श्राद्धान्; च पुनराबालवृद्धलोकं बालवृद्धलोकान्, आ अभिव्याप्य आबालवृद्धलोकम्; अपिशब्दः समुच्चये, याचकान् वनीपकान्, कामितामभीष्टाम्, सर्वेषामपि सौवर्णमुद्रां दातुमना अपि दित्सुरपि, रौप्यमुद्रैव माङ्गल्यहेतुर्मङ्गलत्वकारणमिति जनैरुदित उक्तः सन्, कश्मीरजेन घुसृणद्रवेण मिलन्ती श्लिष्यन्ती चार्वी मनोहरा या चन्दनाम्बुच्छटा ताभिरद्भुतमाश्चर्यकारि यथा स्यात्तथा, रौप्यनाणकदानेन, मानयामास मानयति स्म अपूपुजत् । मानण् पूजायाम् । 'मङ्गलं तु प्रशस्ते स्यात्' भावे ष्यङि माङ्गल्यम् ॥ ४६६–४६८

जैनयाचकभूपीठकीर्तिक्षीराब्धिवृद्धये ।
तदा प्रसारयामास चन्द्रः सद्दानचन्द्रिकाम् ॥ ४६९

**व्याख्या** – चन्द्रः श्रीकर्मचन्द्रः, शशी च, जैनयाचका एव भूपीठं तत्र कीर्तिरेव क्षीराब्धिः, तस्य वृद्धय उत्कल्लोलीकरणाय, तदा नन्दीमहोत्सवे, सद्दानमेव चन्द्रिकां कौमुदीं प्रसारयामास प्रसारयति स्म प्रवर्तयति स्मेति यावत् । कीर्तिवृद्धये दानं ददावित्यर्थः ॥ ४६९

प्रतिज्ञां कृतवानेवं मन्त्रीशोऽवसरे सति ।
सुप्रापं सर्वमप्यस्ति दुष्प्रापोऽवसरः सताम् ॥ ४७०

**व्याख्या** – मन्त्रीशः श्रीकर्मचन्द्रः, अवसरे समये सति, एवमिति प्रकारेऽर्थेऽव्ययम्, एवमीदृक्प्रकारां प्रतिज्ञां सङ्गरं कृतवांश्चक्रे । यतः सर्वमपि सुप्रापं सुखेन प्राप्यत इति सुप्रापमस्ति, परं सतां सज्जनानामवसरो यथोचितसमयो दुष्प्रापो दुर्लभः ॥ ४७०

यतः – कस्य न स्युः प्रियाः प्राणा लक्ष्मीः कस्य न वल्लभा ।
सतामवसरे प्राप्ते द्वयमेतत् तृणायते ॥ ४७१

**व्याख्या** – कस्य जन्तोः, प्राणा असवः, प्रिया इष्टा न स्युः; तथा कस्य लक्ष्मीः श्रीर्न वल्लभा प्रिया; सतामवसरे प्राप्ते वैरिगणमार्गणसाङ्कथ्ये समुपस्थिते, एतद् द्वयम् असु-लक्ष्मीरूपं तृणायते तृणमिव आचरति तृणायते । तृणवत्प्राणान् लक्ष्मीं च त्यजन्तीत्यर्थः ॥ ४७१

अथ प्रतिज्ञातमेवाऽऽह –

याचकेभ्यो मया देयं नव ग्रामा गजा नव ।
शतानि पञ्च सप्तीनां सन्तो यद्गुणवत्प्रियाः ॥ ४७२

**व्याख्या** – मया याचकेभ्यो नव ग्रामाः संवसथाः, ग्रसते बुद्ध्यादीन् गुणानिति ग्रामः । करादिगम्यो ग्राम इत्येके । तथा नव गजाः, तथा सप्तीनामश्वानां पञ्च शतानि, यद् यस्माद्धेतोः, सन्तः सज्जनाः, गुणवन्तो गुणिनः प्रिया येषां ते गुणवत्प्रियाः, अत एव गुणिप्रियत्वेन मन्त्री एतावद् दानं तेभ्यो देयत्वेनाचीकथदिति भावः ॥ ४७२

एवमङ्गीकृतं कोटीदानं देयतया तदा ।
दानमीदृङ् न केनापि दत्तपूर्वं पदोत्सवे ॥ ४७३

**व्याख्या**—तदा तस्मिन्नवसरे मन्त्रिणा कोटीदानं दीयते यत्तद् दानं द्रव्यमित्यर्थः, कोटिसंख्यं द्रव्यमेवममुना प्रकारेण देयतयाऽङ्गीकृतं स्वीकृतम् । ईदृग्दानं केनापि महाशयेन, पदोत्सवे, पूर्वं दत्तं दत्तपूर्वम्, पदोत्सवे केनापि न पुरैतावद् दानं दत्तमित्यर्थः ॥ ४७३

**कोटीध्वजपदं लोकाः कृच्छ्रेणाऽऽसादयन्त्यहो! ।**
**कोटिदानं तदर्थिभ्योऽनेन देयतयाऽऽहृतम् ॥ ४७४**

**व्याख्या**—लोकाः कोटीध्वजपदम्, कृच्छ्रेण कष्टेन आसादयन्ति प्राप्नुवन्ति । अहो इति विस्मये । अनेन श्रीमन्त्रिराजेन तत्कोटिदानमर्थिभ्यो याचकेभ्यो देयतया आदृतमादद्र इति विस्मयः ॥ ४७४

**ततः सङ्घः समग्रोऽपि मन्त्रिराजगृहेऽभ्यगात् ।**
**यशश्चित्रं रचयितुं जनः पूजितपूजकः ॥ ४७५**

**व्याख्या**—ततो नन्दीमहोत्सवकरणानन्तरम्, समग्रोऽपि समस्तोऽपि सङ्घः, मन्त्रिराजगृहे **श्रीकर्मचन्द्र**मन्दिरे, यशश्चित्रं यशस्तिलकम्, रचयितुं कर्तुम्, अभ्यगात् सम्मुखं जगाम । यदिति गम्यते । यद् यस्माद्धेतोः, जनो लोकः, पूजितानामर्चितानां पूजकः । यतः साहिनाऽसौ पूजितस्ततो लोका अप्येनं पूजयन्तीति भावः । 'तिलके तमालपत्रं, चित्रपुण्ड्रविशेषकाः' इति **हैमः** कोषः ॥ ४७५

**प्रददे सोऽपि सङ्घस्य सम्मानमधिकं ततः ।**
**अमान्योऽपि जनो मान्यो गेहायातः किमुत्तमः ॥ ४७६**

**व्याख्या**—ततः श्रीसङ्घागमनानन्तरम्, सोऽपि मन्त्रिराजः, सङ्घस्य अधिकमुच्चैः सम्मानं सत्कारम्, प्रददे दत्तवान् । यतोऽमान्योऽप्यपूज्योऽप्यनभिमतोऽपीत्यर्थः, गेहायातः स्वगृहप्राप्तो जनो मान्यः पूज्यः स्याद् । उत्तमः प्रधानः किम्? स तु विशेषतः पूज्यो भवतीति भावः । 'किमिति पृच्छाजुगुप्सयोरीषदर्थातिशययोरपि' ॥ ४७६

**यतः—आगतस्य निजगेहमप्यरेर्गौरवं विदधते महाधियः ।**
**मीनमत्र सदनं ह्युपेयुषे भार्गवाय गुरुरुच्चतां ददौ ॥ ४७७**

**व्याख्या**—महाधियो महाबुद्धयः, अरेरपि शत्रोरपि, निजगेहं स्वगृहमागतस्य प्राप्तस्य, गौरवं सम्मानम्, विदधते कुर्वते । हिर्यतः, अत्र ग्रहचारविचारे मीनं सदनं गृहमुपेयुषे प्राप्ताय, भार्गवाय शुक्राय गुरुर्बृहस्पतिरुच्चतां ददौ । अयं भावः—

'राहु-रव्योः परं वैरं गुरु-भार्गवयोरपि । हिमांशु-बुधयोर्वैरं विवस्वन्-मन्दयोरपि ॥' इत्युक्तेः शुक्र-गुर्वोर्वैरमस्ति । परं 'स्यान्मीनधन्विनोर्जीव' इत्युक्तेः—मीनो गुरोर्गृहं तत्र च यदा शुक्रः समेति तदोच्चो भवति ।

यदुक्तम्—"रवेर्मेष तुले प्रोक्ते चन्द्रस्य वृष-वृश्चिकौ । भौमस्य मृग-कर्कौ च कन्या-मीनौ बुधस्य च ॥
जीवस्य कर्क-मकरौ मीन-कन्ये सितस्य च । तुला-मेषौ च मन्दस्य उच्चनीचे उदाहृते ॥"

ततः स्वगृहे मीने समेतः शुक्रो वैर्यपि गुरुणोच्चीकृतः । हिरिति स्फुटार्थे हेतौ च । ततः स्ववल्लभागमने किं वाच्यम्? ॥ ४७७

**प्रवाद्य साहिवाद्यानि स्वावासे सचिवः पुनः ।**
**तुरङ्ग-करभ-स्वर्णवासांसि प्रददेऽर्थिनाम् ॥ ४७८**

**व्याख्या**—पुनर्भूयः, सचिवो मन्त्री, स्वावासे स्वसौधे, साहिवाद्यानि **श्रीअकबरा**तोद्यानि, प्रवाद्य वादयित्वा, अर्थिनां याचकानाम्, तुरङ्ग—करभ—स्वर्णवासांसि वाज्युष्ट्रहेमवस्त्राणि प्रददे विश्राणयति स्म ॥ ४७८

**विशिष्टैर्वेष्टितो मन्त्री नरैः सदुपदाकरैः ।**
**सहायोत्साहितः साहेर्मन्दिरं प्राप साहसी ॥ ४७९**

**व्याख्या** – साहसी साहसवान्, मन्त्री श्रीकर्मचन्द्रः, शोभनोपदा ढौकनं करे येषां ते सदुपदाकरास्तैर्ढौकनहस्तैः, विशिष्टैः प्रधानैर्नरैः पुरुषैर्वेष्टितः परिवृतः, सहायैः सेवकैरुत्साहित उद्यमितः सहायोत्साहितः, साहेर्मन्दिरं गृहं प्राप ॥४७९

**श्रीजैनदर्शनोद्द्योतविधानैकनिबन्धनम् ।**
**प्रतीतेरास्पदं साहेः शेषं अवलफइजलम् ॥ ४८०**
**पुरस्कृत्य ससत्कारं श्रीसाहेः पुरतो दश ।**
**गजान् द्वादश वाजीन्द्रान् वासांसि विविधानि च ॥ ४८१**
**सहस्रदशकं राजद्राजतानां च तत्क्षणात् ।**
**सर्वसामाजिकाध्यक्षं प्राभृतीकृतवानिति ॥ ४८२** – त्रिभिर्विशेषकम् ।

**व्याख्या** – मन्त्री शेषं अवलफइजलं पुरस्कृत्य अग्रे विधाय, ससत्कारं सत्कारसहितं यथा स्यात्तथा, तत्क्षणात् सद्यः, सर्वे ये सामाजिकाः पार्श्वस्थास्तदध्यक्षं तत्प्रत्यक्षं सर्वसामाजिकाध्यक्षम्, श्रीसाहेः पुरतोऽग्र इति प्राभृतीकृतवान् उपदीचक्रे । इतीति किम्? दश गजान्, द्वादश वाजीन्द्रान्, चः समुच्चये, विविधानि नानाप्रकाराणि वस्त्राणि, तुक्सेति ख्यातानि; च पुनः, राजद्राजतानां शोभमानरौप्यनाणकानां सहस्रदशकं दश सहस्राणि, किंभूतं शेषम्? श्रीजैनदर्शनस्य श्रीजिनधर्मस्य, उद्द्योतविधाने प्रभासन एकमद्वितीयं निबन्धनं कारणम्; तथा साहेरकबरस्य प्रतीतेः प्रत्ययस्य आस्पदमाश्रयो विस्रम्भास्पदमित्यर्थः ॥ ४८०–४८२

**दृष्ट्वाऽथोत्सृष्टमुत्कृष्टं प्राभृतं प्रभुतावहम् ।**
**जलालदीर्जगौ गाजीः किंनिमित्तमिदं वद ॥ ४८३**

**व्याख्या** – अथ ढौकनढौकनानन्तरम्, जलालदीर्गाजीरकबरः, प्रभुतावहमैश्वर्यधारकमुत्कृष्टं प्रधानं प्राभृतं गजाद्युपदामुत्सृष्टं दत्तं दृष्ट्वा, मन्त्रिणं जगौ प्रोवाच, हे मन्त्रिन्! इदं प्राभृतं किंनिमित्तम्? त्वं वद ब्रूहि ॥ ४८३

**जिनचन्द्रगुरोरेवं गौरवाय प्रवर्तितः ।**
**युगप्रधाननाम्नोऽयमुत्सवोऽद्येति मन्त्र्यवक् ॥ ४८४**

**व्याख्या** – हे साहे! जिनचन्द्रगुरोर्गौरवाय बहुमानाय, युगप्रधाननाम्नः श्रीसाहिदत्तयुगप्रधान इत्यभिधायाः अयमुत्सवः, अद्यैवममुना प्रकारेण, मया प्रवर्तित आरब्ध इति मन्त्र्यवगुवाच ॥ ४८४

**युक्तमित्युक्तिपूर्वं तत् प्रसादीकृतवानहो! ।**
**सचिवस्यैव भूजानिर्गृहीत्वा रौप्यमेककम् ॥ ४८५**
**अष्टमांशः सदाऽस्माकं विद्यते धर्मकर्मणाम् ।**
**तथा किमावयोर्दायं पृथग् यद्दातुमीहितम् ॥ ४८६** – युग्मम् ।

**व्याख्या** – हे मन्त्रिन्! इदं युक्तं न्याय्यमित्युक्तिपूर्वं कथनपुरस्सरम्, तद्ढौकनम्, भूजानिः श्रीसाहिस्तन्मध्य एककमेकं रौप्यं राजतं मङ्गलनिमित्तं गृहीत्वा, सचिवस्यैव मन्त्रिण एव, प्रसादीकृतवान् दत्तवानित्यर्थः । अहो इति विस्मये । विस्मयश्चेत्थम् – अन्येषामसौ साहिर्ढौकितं वस्तु लोलुपत्वान्न प्रतिददौ । अस्मै पुनः सर्वं प्रसादीकृतवानिति । हे मन्त्रिन्! भवदुक्त्या सदा नित्यमस्माकं क्रियमाणानां धर्मकर्मणामष्टमोंऽशो भागो विद्यते । तथा आवयोर्दायं धनं किं पृथग् भिन्नं विद्यते? यद् यस्माद्धेतोरेतत् त्वया दातुं वितरितुमीहितं वाञ्छितम्? । दायशब्दो धनार्थः पुन्नपुंसके । यदुक्तं – 'खं दायौकस्वरे' ॥ ४८५–४८६

**ततः सामन्तचक्रस्य पुरस्तादस्तशात्रवः ।**
**प्रशशंस तकत्कृत्यं साहिरुत्साहशक्तिमान् ॥ ४८७**

**व्याख्या** – ततोऽनन्तरम्, साहिः सामन्तानां त्रिचतुरदेशाधिपतीनाम्, यच्चक्रं वृन्दम्, तस्य पुरस्तादग्रे, तकत् तत्कृत्यमुपदालक्षणं प्रशशंस तुष्टाव । किंभूतः? अस्ता दूरीकृताः शात्रवाः प्रतिपक्षा येन सोऽस्तशात्रवः । तथा उद्यम्य सहनमुत्साहशक्तिस्तद्वानुत्साहशक्तिमान् । तकदिति 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यकच् ॥ ४८७

**शश्लाघे च ततोऽखण्डा मण्डलेश्वरमण्डली।**
**चन्द्रं चन्द्रमिवामात्यं द्वितीयायां पुरःस्थितम् ॥ ४८८**

**व्याख्या**—चः समुच्चये, ततः साहिस्तवनानन्तरम्, अखण्डा पूर्णा, मण्डलेश्वराणां राज्ञाम्, मण्डली वृन्दम्, पुरःस्थितमग्रे स्थितम्, चन्द्रं श्रीकर्मचन्द्रममात्यम्, द्वितीयायां चन्द्रं शशिनमिव शश्लाघे श्लाघते स्म अस्तवीत्। यथा द्वितीयायामुदितश्चन्द्रः श्लाघ्यते तथा तं श्रीकर्मचन्द्रं सर्वेऽपि शश्लाघिरे ॥ ४८८

**एवं शेषूसुरत्राणस्याग्रेऽपि विधृतोपदा।**
**शेषस्यापि पुरस्तेने तेन ढौकनिका घना ॥ ४८९**

**व्याख्या**—एवममुना प्रकारेण, यथा श्रीसाहेः पुरो धृता तथा **शेषूसुरत्राणस्य** अग्रेऽपि उपदा ढौकनं धृता, तथा **शेषस्यापि अवलफइजलस्यापि** पुरस्तेन मन्त्रिणा, घना बह्वी ढौकनिका तेने विस्तारिता ॥ ४८९

**इत्थं तथ्यां विधायाऽऽत्मसन्धां साधीयसीमसौ।**
**कृतकृत्योऽभवन्मन्त्री सिद्धमन्त्र इवाङ्गभृत् ॥ ४९०**

**व्याख्या**—इत्थममुना प्रकारेण, साधीयसीमतिशयेन दृढाम्, आत्मनः स्वस्य सन्धां प्रतिज्ञामात्मसन्धाम्—कोटिदानलक्षणाम्, तथ्यां सत्यां विधाय कृत्वा, मन्त्री श्रीकर्मचन्द्रः, कृतकृत्यो विहितप्रतिज्ञातकार्योऽभवत्। उत्प्रेक्ष्यते—अङ्गभृत् शरीरी सिद्धमन्त्र इव निष्पन्नमन्त्र इव। यथा पञ्चाङ्गो मन्त्रस्तत्क्षणात् कृतकृत्यो भवति, तथाऽयमपि कृतकृत्योऽभवदित्यर्थः। यत् **कौटिल्यः**—'कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद् देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः।' अतिशयेन बाढा साधीयसी। 'अन्तिकबाढयोर्नेदसाधौ' इति बाढस्य साधादेश इष्ठेयसोः। यद्वा सिद्धः पठितसिद्धो मन्त्रो ह्रींकारादिः स इव ॥ ४९०



**पूज्यैः पक्षचतुर्मासीसमापर्वसु शाश्वती।**
**नमस्कारसमादिष्टिर्दिष्टा बोहित्थसन्ततेः ॥ ४९१**

**व्याख्या**—पूज्यैर्युगप्रधानगुरुभिः, पक्षशब्देन पाक्षिकं चतुर्दशीलक्षणं पर्व गृह्यते, तथा चतुर्मासीशब्देन चातुर्मासिकं पर्व गृह्यते, समापर्वशब्देन सांवत्सरिकं पर्व गृह्यते, एतेषु शाश्वती नित्या बोहित्थसंततेः—**बोहित्थराजसन्तानस्य** नमस्कारसमादिष्टिः **'जयतिहुयणे'**त्यादिनमस्कारादेशो दिष्टा दत्ता। 'दिशीत् अतिसर्जने' त्यागे क्ते दिष्ट इति ॥ ४९१

**अहो! पुण्यमहो! भाग्यमहो! सौभाग्यमद्भुतम्।**
**सर्वलोकातिशायी यन्महिमाऽस्य प्रसर्पति ॥ ४९२**

**व्याख्या**—अहो इति सम्बोधनेऽव्ययम्, भो लोकाः! शृण्वन्तु, अस्य **श्रीकर्मचन्द्रस्य**, अद्भुतमाश्चर्यकारि पुण्यं पूर्वकृतसुकृतम्; तथा अहो! अस्य अद्भुतं भाग्यं भागधेयम्; तथा अहो! अस्य अद्भुतं सौभाग्यं सुभगता सर्वजनवाल्लभ्यम्; यद् यस्मादस्य मन्त्रिणो महिमा माहात्म्यम्, सर्वलोकानतिशेत इत्येवंशीलः सर्वलोकातिशायी। सर्वलोकमहिमभ्योऽप्यधिक इत्यर्थः। प्रसर्पति प्रसरति। सृ पृं गतौ ॥ ४९२

**एवं सम्प्रति विजयी वनितासुतराज्यसम्पदा कलितः।**
**श्रीजिनशासनशोभाविधायको जगति सचिवेशः ॥ ४९३**

**व्याख्या**—एवममुना प्रकारेण, जगति विष्टपे, सचिवेशः श्रीकर्मचन्द्रः, सम्प्रति इदानीम्, विजयत इत्येवंशीलो विजयी विजयनशीलः। स्तादिति गम्यते। किंभूतः? वनिता भार्या **अजायबदे—जीवादे—कर्पूरदे**व्यभिधाना मन्त्रिण्यः, सुतौ च **श्रीभाग्यचन्द्र—श्रीलक्ष्मीचन्द्रौ** कुमारौ, तैः सहिता या राज्यसम्पत् तया कलितः सहितः। तथा श्रीजिनशासनशोभाया विधायकः कर्ता ॥ ४९३

पुण्यात्मना यथैकेन शशिना शोभितं नभः ।
पुण्यात्मना तथाऽनेन मन्त्रिणा शोभितं कुलम् ॥ ४९४

**व्याख्या** – यथैकेन पुण्यात्मना सुन्दरस्वभावेन शशिना चन्द्रेण, नभ आकाशं शोभितं शोभां प्रापितम्, तथेति सादृश्ये, तथाऽनेन मन्त्रिणा पुण्यात्मना पवित्रचित्तेन, कुलं निजान्वयः, शोभितमुत्कृष्टतां नीतम् ।

'पुण्यं तु सुन्दरे सुकृते पावने धर्मे ।'

'आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे । परमात्मनि जीवेऽर्के हुताशनसमीरयोः ॥

'स्वभावे' इत्यनेकार्थः । शुभ् दीप्तौ, क्ते शोभितः ॥ ४९४

दानिनां भोगिनां पङ्क्तौ वीराणां मन्त्रिणां तथा ।
सङ्ग्रामसूनुर्जागर्ति प्रथमो गुणवत्तया ॥ ४९५

**व्याख्या** – सङ्ग्रामसूनुः श्रीकर्मचन्द्रः, दानिनां दातॄणाम्, पङ्क्तौ श्रेण्याम्, गुणवत्तया औदार्यादिगुणयुक्तत्वेन, प्रथम आदिमो मुख्यो जागर्ति दीप्यते । दानशौण्डो वर्तत इत्यर्थः । तथा भोगिनां भोक्तॄणां पङ्क्तौ, भोगान्तरायकर्मक्षयोपशमरूपगुणवत्त्वेन प्रथमो जागर्ति महाभोक्तेत्यर्थः । तथा वीराणां शूराणां पङ्क्तौ, शौर्यरूपगुणवत्त्वेन प्रथमो जागर्ति, रणे न कदापि वैरिणां पृष्ठं ददातीत्यर्थः । तथा मन्त्रिणामालोचकारिणां पङ्क्तौ, मतिनैर्मल्यरूपगुणवत्त्वेन प्रथमो जागर्ति, महामन्त्रविधायक इत्यर्थः ॥ ४९५

अधिकारनियुक्तानां भूपानां मन्त्रिणां तथा ।
संख्या न विद्यते नूनं कृतयोः पुण्यपापयोः ॥ ४९६

**व्याख्या** – अधिकारे दण्डनायकत्वादिरूपे, नियुक्तानां व्यापृतानाम्, तथेति समुच्चये, भूपानां राज्ञां तथा मन्त्रिणां धीसखानाम्, कृतयोः पुण्यपापयोः, संख्या इयत्ता गणनेति यावन्न विद्यते । नूनं निश्चितम्, तैः पापान्यपि क्रियन्ते पुण्यान्यपि क्रियन्ते । राज्याधिकारित्वात् । अत एव तत्कृते पुण्य-पापे न संख्यातुं शक्येते । अस्यापि मन्त्रिराजत्वात् पुण्य-पापे द्वे अपि गणनातीते ॥ ४९६

तथापि पुण्यकार्याणि व्याक्रियन्ते महात्मभिः ।
राजहंसैर्यथा वारि मुक्त्वा संगृह्यते पयः ॥ ४९७

**व्याख्या** – तथापि महात्मभिर्महाशयैः, तेषां गणनातीतपुण्यपापवतामपि, पुण्यकार्याणि तैः कृतानि धर्मकृत्यानि, व्याक्रियन्ते कथ्यन्ते । यतो यस्माद्धेतोः, राजहंसैर्वारिजलं मुक्त्वा पयो दुग्धं संगृह्यते । तेषां पुरः पयो यदा पातुं दीयते तदा तैः पयः पीयते, जलं पश्चादवतिष्ठते । यदुक्तम् –

"अम्लत्वेन रसज्ञाया मिश्रयोः क्षीर-नीरयोः । विवेच्याऽऽपिबति क्षीरं नीरं हंसो विमुञ्चति ॥"

एवं सतामपि स्वभावोऽयं यत् तत्कृतपुण्यान्येव गृह्यन्ते न तत्कृतपापकर्माणि स्मर्यन्ते ॥ ४९७

यद्यपि कमल-कुमुदयोर्विकास-सङ्कोचकारिताऽस्ति रवौ ।
सन्तस्तथापि तस्मिन् पयोजबन्धुत्वमेवाऽऽहुः ॥ ४९८

**व्याख्या** – यद्यपि रवौ सूर्ये, कमल-कुमुदयोर्विकास-सङ्कोचौ करोतीत्येवं शीलो विकास-सङ्कोचकारी तद्भावो विकास-सङ्कोचकारिताऽस्ति । कमलं विकासयति, कुमुदं सङ्कोचयतीत्युभे अपि गुण-दूषणे रवौ स्तः; तथापि सन्तस्तस्मिन् रवौ, गुणग्राहित्वेन पद्मविकासकत्वात् पयोजबन्धुत्वमेव आहुर्ब्रुवते । न कुमुदसङ्कोचकत्वेन कुमुदवैरीति ब्रुवते । रवेर्नाम अब्जबन्धुरिति रूढम्, न कुमुदवैरीति ॥ ४९८

दूषण-गुणपरिपूर्णे नरे खलो भवति दोषगणरसिकः ।
केलिवने किमु करभः कारेल्लिफलं न चाश्नाति ॥ ४९९

**व्याख्या** – दूषणैर्दोषैर्गुणैश्च सौजन्यादिभिः, परिपूर्णे निर्भरे नरे, खलो द्विजिह्वः, दोषगणरसिको दोषवृन्दग्राही भवति । किमु किम्, केलिवने रम्भाकानने, प्रविष्टोऽपीति गम्यते, करभस्त्रिहायण उष्ट्रः, कारेल्लिफलं न च अश्नाति, न खादति, अपि तु केलिदलानि परित्यज्य कारेल्लिफलमेव करभो ग्रसते । एवं दुर्जनो गुणदूषणवतोऽपि पुरुषस्य दूषणान्येव गृह्णीते न गुणान् ॥ ४९९

**तेन खलानां शैली न शीलनीयेति मनसि परिभाव्य ।**
**गुणमात्रग्रहणार्थी जातोऽस्मि जनाः शृणुत इति भोः! ॥ ५००**

**व्याख्या** – तेन कारणेन, खलानां द्विजिह्वानम्, शैली रीतिर्दोषग्रहणरूपा, न शीलनीया निषेवणीयेति मनसि परिभाव्य आलोच्य, गुणमात्रग्रहणार्थी गुणानामेव ग्राहको जातोऽस्मीति भो जनाः ! यूयं शृणुत ॥ ५००

**दायका नायका रक्ता विरक्ता याचकाश्च ये ।**
**सर्वेऽपि वर्णनां वर्णाः सकर्णा अस्य कुर्वते ॥ ५०१**

**व्याख्या** – दायका दातारो नायकाः स्वामिनो रक्ता रागिणो विरक्ता वैरङ्गिका याचका वनीपकाः, चः समुच्चये, ये जगति वर्तन्ते ते, तथा सर्वेऽपि वर्णा ब्राह्मणादयः, सकर्णाः सहृदयाः सश्रोत्राश्च, अस्य मन्त्रिराजस्य, वर्णनां स्तुतिं कुर्वते । सर्वेषामप्यसौ स्तवनीयः सुभगत्वादिति भावः ॥ ५०१

**अदृष्टगुणलेशोऽपि वर्ण्यः स्याल्लोकवार्तया ।**
**अयं दृष्टगुणग्रामो न वर्ण्यः स्यात् कथं मम ॥ ५०२**

**व्याख्या** – न दृष्टो वीक्षितो गुणलेशो गुणकणिका यस्य स एवंविधोऽपि पुरुषः, लोकवार्तया जनकिंवदन्त्या, वर्ण्यः स्यात् । स्वयं तस्य गुणा न दृष्टाः परं लोकैरुक्तास्ततः सोऽदृष्टगुणोऽपि लोकोक्त्या वर्ण्यते । अयं तु श्री**कर्मचन्द्रो** दृष्टगुणग्रामः स्वनेत्राभ्यां वीक्षितगुणसमूहः, कथं केन प्रकारेण, मम न वर्ण्यः स्तवनीयः स्यात्? अपि त्वसौ दृष्टगुणत्वात् स्तवनीय एवेति भावः । गुणशब्दाद् ग्रामशब्दः समूहार्थः । यदुक्तम् – 'ग्रामो विषयशब्दास्त्र-भूतेन्द्रियगुणाद् व्रजे ।' इति ॥ ५०२

**देवभक्तो गुरोर्भक्तः सङ्घभक्तोऽतिथिप्रियः ।**
**चिरं जीयान्महामन्त्री कर्मचन्द्रः ससन्ततिः ॥ ५०३**

**व्याख्या** – **कर्मचन्द्रो** महामन्त्री, ससन्ततिः ससन्तानश्चिरं जीयाज्जयमासादयतु । किंविशिष्टो महामन्त्री? देवानामर्हतां भक्तो भक्तिकृत् सेवको देवभक्तः । तथा गुरोर्जात्यैकवचनं गुरूणां भक्तः । तथा सङ्घभक्तः साधु-साध्वी-श्रावक-श्राविकारूप-समुदायपर्युपासकः । तथा अतिथयः प्राघूर्णकाः प्रिया यस्य सोऽतिथिप्रियः । यद्गृहेऽतिथयः समेताः पूर्णमनोरथा यान्तीति भावः ।

यतः – "अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥" ५०३

**एवं स्वयं रोपितपुण्यकल्पवृक्षस्य भव्याः परिभाव्य भव्यम् ।**
**फलं विशेषेण विशुद्धभावजलेन सेक्यः कृतिना स एव ॥ ५०४**

**व्याख्या** – एवममुना प्रकारेण, भो भव्याः मुक्तिपर्यायेण भविष्यन्ति भव्याः सिद्धिगमनयोग्याः, न पुनरवश्यं सिद्धिगामिन एव । भव्यानामपि केषाञ्चित् सिद्धिगमनासम्भवात् । उक्तं च 'भव्वा वि न सिज्झिस्संति के' इत्यादि । स्वयमात्मना रोपित उत्पादितो यः पुण्यकल्पवृक्षस्तस्य भव्यं सुन्दरं फलं सर्वसम्पल्लक्षणं विभाव्य विचार्य, विशेषेण सादरम्, स एव पुण्यकल्पवृक्षः, कृतिना विचक्षणेन, विशुद्धो विशदो भावोऽभिप्राय एव जलं तेन सेक्यः सेचनीयः पल्लवनीयः । षिचींत् क्षरणे । ऋहलोर्ण्यत् । 'चजोः कुघिण्यतोः' इति कुत्वम् । सेच्य इति पाठे त्वर्हार्थे यत् । रोपित इति, रुह जन्मनि 'रुहः पोऽन्यतरस्याम्' इति णौ रुहः पः, क्ते रोपित इति ॥ ५०४

अथाविच्छिन्नसन्तत्यर्थमावसानिकं स्वगुरुस्मरणरूपं मङ्गलं कविः सूत्रयति –

**श्रीवर्द्धमानतीर्थे सधर्मसौधर्मगणधराम्नाये ।**
**उद्द्योतनसूरिगुरुर्जज्ञे शासनकृतोद्द्योतः ॥ ५०५**

**व्याख्या** – श्रीवर्द्धमानस्य तीर्थे दर्शने, सधर्मसौधर्मगणधराम्नाये **सुधर्मगणधरस्या**यं सौधर्मगणधर आम्नायोऽन्वयः सौधर्मगणधराम्नायः, सधर्मा निर्दोषयतिधर्मसहितश्चासौ सौधर्मगणधराम्नायश्च सधर्मसौधर्मगणधराम्नायस्तस्मिन् सुधर्मगणभृद्वंशे, **उद्द्योतनसूरिगुरु**र्जज्ञे बभूव । किंभूतः ? शासने श्रीजिनशासने कृत उद्द्योतः प्रकाशो येन स शासनकृतोद्द्योतः, 'आम्नायः कुल आगम उपदेशे' इत्यनेकार्थः । कुलेऽन्वये ॥ ५०५

**श्रीसूरिमन्त्रशुद्धिर्यैर्विदधे सुविहिताग्रिमैरग्या ।**
**धरणाधिपसान्निध्यात् तत्पट्टे वर्द्धमानास्ते ॥ ५०६**

**व्याख्या** – तेषाम् **उद्द्योतन**सूरीणां पट्टे ते **वर्द्धमाना** बभूवुः । यैः श्रीवर्द्धमानैः, सुविहितानां सन्मार्गप्रवर्तकानां मध्येऽग्रिमा उत्कृष्टास्तैः, अग्र्या प्रधाना, धरणाधिपसान्निध्याद् धरणेन्द्रप्रभावात्, श्रीसूरिमन्त्रशुद्धिर्विदधे विहिता । तत्प्रबन्धश्चायम् –

"अह अन्नया कयाइ **सिरिवद्धमाणसूरि**आयरिया अरण्णचारिगच्छनायगा सिरि**उज्जोयणसूरि**णो [सीसा] गामाणुगामं दूइज्जमाणा अप्पडिबंधेणं विहारेणं विहरमाणा **अब्बुयगिरि**सिहरतलहटीए **कासद्दह**गामे समागया । तयाणंतरे **विमलदंडनायगो पोरवाडवंस**मंडणो देसभागं उग्गाहेमाणो सोऽवि तत्थेवागओ । अब्बुयगिरिसिहरे चडिओ । सव्वओ पव्वयं पासित्ता पमुइओ चित्ते । चिंतेउमाढत्तो । इत्थ जिणपासायं करेमि । ताव **अचलेसरदुग्गवासिणो** जोगीजंगमतावससन्नासिणो माहणप्पमुहा दुट्ठमिच्छत्तिणो मिलिऊण विमलसाहुदंडनायगसमीवं आढत्ता एवं वयासी । भो विमल ! तुम्हाणं इत्थ तित्थं नत्थि । अम्हाणं तित्थं कुलपरंपरायातं वट्टइ । अओ इहेव तव जिणपासायं काउं न देमो । तओ विमलो विलक्खो जाओ । अब्बुयगिरिसिहरतलहटीए कासद्दहगामे समागओ । जत्थ वद्धमाणसूरी समोसढो तत्थेव गुरुं विहिणा वंदिऊण एवं वयासी – भगवन् ! इहेव पव्वए अम्हाणं तित्थं जिणपडिमारूवं वट्टइ त्ति वा नवा ? । तओ गुरुणा भणियं – वच्छ ! देवयाआराहणेण सव्वं जाणिज्जइ । छउमत्था कहं जाणंति । तओ तेण विमलेण पत्थणा कया । किं बहुणा वद्धमाणसूरीहिं छम्मासीतवं कयं । तओ धरणिंदो आगओ । गुरुणा कहियं – भो धरणिंदा ! सूरिमंतअधिट्ठायगा चउसट्ठि देवया संति, ताण मज्झे एगाऽवि नाऽऽगया । न किंचि कहियं । किं कारणं ? धरणिंदेणुत्तं – भगवं ! तुम्हाणं सूरिमंतस्स अक्खरं वीसरियं । असुद्धभावाओ देवया नाऽऽगच्छंति । अहं तवबलेण आगओ । गुरुणा वुत्तं – भो महाभाग ! पुव्वं सूरिमंतसुद्धिं करेहि, पच्छा अन्नं कज्जं कहिस्सामि त्ति । धरणिंदेणुत्तं – भगवन् ! मम सत्ती नत्थि सूरिमंतक्खरस्स सुद्धिमसुद्धिं काउं तित्थंकरं विणा । तओ सूरिणा सूरिमंतस्स गोलओ धरणिंदस्स समप्पिओ । तेण **महाविदेहखित्ते** सीमंधरसामिपासे नीओ । तित्थंकरेण सूरिमंतो सुद्धो कओ । तओ धरणिंदेण सूरिमंतगोलओ सूरीण समप्पिओ । तओ वारत्तयसूरिमंतसमरणेण सव्वे अहिट्ठायगा देवा पच्चक्खीभूया । तओ गुरुणा पुट्ठा – विमलदंडनायगो अम्हाणं पुच्छइ अब्बुयगिरिसिहरे जिणपडिमातित्थं अच्छइ नवा ? । तओ तेहिं भणियं – **अब्बुयादेवी**पासाओ वामभागे अदबुदआदिनाहस्स पडिमा वट्टइ । अखंडक्खयसत्थियस्स उवरि चउसरपुप्फमाला जत्थ दीसइ तत्थ खणियव्वं । इइ देवयावयणं सुच्चा गुरुणा विमलसाहुस्स पुरओ कहियं । तेण तहेव कयं । पडिमा निग्गया । विमलेण सव्वे पासंडिणो आहूया दिट्ठा जिणपडिमा । सामवयणा जाया । पासायं काउमारद्धं विमलेण । तओ पासंडेहिं भणियं – अम्हाणं भूमिदव्वं देहि । तओ विमलेण भूमी दव्वेहिं पूरिऊण पासायं कयं । वद्धमाणसूरीहिं तित्थं पइट्ठियं न्हवणपूयाइ सव्वं कयं । तओ पच्छा गयकालेण मिच्छत्तिणो तस्साधीणा जाया । तओ बावन्नजिणालओ सोवन्नकलसधयसहिओ निम्मविओ विमलेण । अट्ठारसकोडीतेवन्नलक्खसंखो दव्वो लग्गो । अज्ज वि अखंडो पासाओ दीसति ।"

**वसतिनिवासः प्रादुश्चक्रे यैश्चैत्यवासिनोऽपास्य ।**
**जातास्ततो जिनेश्वरगुरवो दुर्लभनृपतिसदसि ॥ ५०७**

**व्याख्या**—यैः श्रीजिनेश्वरसूरिभिर्दुर्लभनृपतिसदसि दुर्लभराजसभायाम्, चैत्ये वस्तुं शीलं येषां ते चैत्यवासिनस्तान् अपास्य दूरीकृत्य, वसतिनिवासो गृहिवितीर्णस्वगृहोपाश्रयावस्थानम्, प्रादुश्चक्रे प्रकटीकृतः । ते जिनेश्वरगुरवस्ततो वर्धमानसूर्यनन्तरं जाताः । कथं चैत्यवासिनोऽपास्ताः कथं च वसतिवासः प्राकट्यतेति ? तत्प्रबन्धश्चायम्—

ततः क्रमेण श्रीवर्द्धमानसूरयः **सरस्वतीपत्तने** स्थिताः । तत्र **जिनेश्वर-बुद्धिसागरौ** सहोदरौ विप्रौ दीक्षितौ । तद्भगिनी**कल्याणमति**श्च दीक्षिता । प्रस्तावे च पण्डितजिनेश्वरगणिना प्रोत्साहिताः श्रीवर्द्धमानसूरयः शकुननिमित्तादि परिभाव्य महासार्थसहिता आत्मनाऽष्टादशाः प्रस्थिताः क्रमेण प्राप्ता **अणहिल्लपत्तने** । उत्तीर्णा मण्डपिकायाम् । ततः पण्डितजिनेश्वरेण गुरुमनुज्ञाप्य नृपसत्कपुरोहितस्य गृहे अभ्यङ्गं कुर्वाणस्य—

'श्रिये कृतनतानन्दा विशेषवृषसंस्थिताः । भवन्तु तव विप्रेन्द्र !, ब्रह्मश्रीधरशङ्कराः ॥'

एष आशीर्वादः प्रददे । ततः पुरोधसा चिन्तितम्—अहो ! विचक्षणोऽयं व्रती कश्चित् । तदा च गृहैकदेशस्थान् छात्रान् वेदपाठं **'ॐ ऋषभं पवित्रं पुरुहूतमध्वरं यज्ञं महेशम्'** इत्यादिरूपमन्यथाऽधीयानान् श्रुत्वा 'मैवं पठत भोः ! किन्त्वेव'मिति जिनेश्वरेणोक्ते, पुरोधाः—'कथं शूद्रा वेदपठनानधिकारिणः शुद्धमशुद्धं वा जानन्ति ?' । जिनेश्वरेणोक्तम्—'चतुर्वेदविदो वयं ब्राह्मणाः ।' ततो वर्द्धमानसूरयस्तद्गृहैकदेशे स्थिताः । साधवो द्विजगृहेषु विहरन्ति । उच्छलिता वार्ता । यदुत वसतिपाला यतयः समायाताः सन्ति । चैत्यवासिभिर्बालकान् प्रलोभ्य वार्ता उत्थापिता इमाः—यच्छ्वेताम्बररूपेण परराष्ट्रात् केचन हेरिका आयाताः पुरोहितगृहे स्थिताः । ततो नृपाग्रे पुरोधसा द्रम्मलक्षेण पणो मुक्तः । परं कोऽपि नोत्पाटयति । एवं चैक उपायो निष्फलो जातः । ततः **पञ्चासरीय**देवगृहे **दुर्लभराज**नृप उपविष्टे वादार्थं **सूराचार्य**प्रमुखाश्चतुरशीतिराचार्या गब्दिकासूपविष्टास्ताम्बूलादिना नृपेण सत्कृताः । ततो वर्द्धमानसूरयो जिनेश्वरगणिप्रमुखकतिचिन्मुनिवृन्दारकयुतास्तत्र ययुः । ताम्बूले नृपेण दीयमाने भणितं जिनेश्वरेण—'महाराज ! यतीनां न कल्पत एतत्' । उक्तं च स्मृतौ—

'ब्रह्मचारियतीनां च विधवानां च योषिताम् । ताम्बूलभक्षणं विप्रा ! गोमांसादतिरिच्यते ॥ १
स्नानमुद्वर्तनाभ्यङ्गं नखकेशादिसंस्क्रियाम् । धूपं माल्यं च गन्धं च त्यजन्ति ब्रह्मचारिणः ॥ २

एतच्छ्रुत्वा विपक्षा विच्छाया जाताः । ततश्चैत्यवासिसूराचार्येण चैत्यवासे स्थापिते सति, वसतिवासस्थापनाय पण्डितजिनेश्वरेण—

'अन्नत्थं पगडं लेणं भइज्ज सयणासणं । उच्चारभूमिसंपन्नं इत्थीपसुविवज्जियं ॥'

इति **दशवैकालिक**गाथया ते निर्जिताः । ततः श्रीवर्द्धमानसूरयः प्राप्त**खरतर**विरुदा नृपप्रदत्तपौषधशालायां स्थिताः । इति द्वितीयोऽप्युपायो न फलितः । ततो राज्ञी तैर्विप्रतारिता । सोऽप्युपायो न फलितः । चैत्यानि वयं न पूजयिष्यामो यद्येते वसतिपाला अत्र स्थास्यन्ति । चतुर्थोऽप्युपायस्तेषां न फलितः । क्रमेण वर्द्धमानसूरिः श्रीजिनेश्वरसूरीन् स्वपदे निवेश्य स्वर्गं जग्मुः ॥ ५०७

**तत्पट्टे सम्भूताः श्रीजिनचन्द्रा विकाशिमुखचन्द्राः ।**
**संवेगरङ्गशालाप्रकरणकाराः सदाकाराः ॥ ५०८**

**व्याख्या**—तेषां श्रीजिनेश्वरसूरीणां पट्टे श्री**जिनचन्द्राः** सम्भूता जाताः । किम्भूताः ? विकाशते दीप्यत इत्येवंशीलो विकाशी दीपनशीलो मुखचन्द्रो येषां ते विकाशिमुखचन्द्राः । तथा **संवेगरङ्गशालाप्रकरण**मष्टादशसहस्रप्रमाणं कुर्वन्तीति संवेगरङ्गशालाप्रकरणकाराः । तथा सन् शोभन आकार आकृतिर्येषां ते सदाकाराः ॥ ५०८

**यैरभिनवा नवाङ्गीविवृतिर्विदधे विशुद्धधीनिधिभिः ।**
**शासनसुरीप्रसादाद् देवा अभयादिमास्तदनु ॥ ५०९**

**व्याख्या**—तदनु श्रीजिनचन्द्रसूर्यनन्तरम्, अभय इत्यादिमः प्रथमो येषां देवानां त अभयादिमा देवा **अभयदेवा** इत्यर्थः जाताः । यैः श्रीअभयदेवसूरिभिः, विशुद्धा निर्मला या धीर्बुद्धिस्तस्या निधयो निधानानि तैर्विशुद्धधीनिधिभिः, शासनसूरिप्रभावाच्छासनदेवतामाहात्म्यात्, अभिनवा नव्या नवाङ्गीविवृतिः **स्थानाङ्गा**दिसिद्धान्तनवकविवरणं विदधे विहिता । अत्रायं सम्प्रदायः—

श्रीजिनेश्वरसूरिभिः स्वशिष्यौ जिनचन्द्राभयदेवौ स्वपदे स्थापितौ । क्रमेण युगप्रवरौ जातौ । अन्यौ च द्वौ **श्रीजिनभद्र-हरिभद्रा**चार्यौ कृतौ । **धर्मदेव-सुमति-विमल**नामानस्त्रयः पाठकाः कृताः । **धर्मदेवो**पाध्याय-**सहदेव**गणी द्वावपि भ्रातरौ **सोमचन्द्र**पण्डितश्च शिष्याः कृताः, तैः श्रीजिनेश्वरसूरिभिराशापल्ल्यां ***लीलावती***ग्रन्थश्चक्रे । **डिण्डियाणक**ग्रामे प्राप्तैः पूज्यैर्व्याख्यानाय चैत्यवास्याचार्याणां पार्श्वाद्याचितः पुस्तकः । तैः कलुषितहृदयैर्न दत्तः । ततः पश्चिमप्रहरद्वये विरच्यते प्रभाते व्याख्यायते । इत्थं **कथानककोश**श्चतुर्मास्यां कृतः । श्रीजिन[ शासन ]प्रभावनां कृत्वा श्रीजिनेश्वरसूरयो दिवं जग्मुः । ततः श्रीजिनचन्द्रसूरिभिरष्टादशसहस्रप्रमाणा **संवेगरङ्गशालाकथा** कृता । स्वर्गश्चालंकृतः । ततः श्रीअभयदेवसूरिर्नवाङ्गीवृत्तिकर्ता युगप्रधानोऽभवत् । यद्यपि 'पूरणगुणे'त्यादिना षष्ठीसमासनिषेधात् तदन्वित्यत्र समासश्चिन्त्यः, तथापि तदनु तदुपरीत्यादयः शब्दाः ससमासा महाकविनिबद्धत्वात् साधवः ॥ ५०९

**श्रीजिनवल्लभसूरिस्ततोऽभवद् व्रतधुरैकधौरेयः ।**
**चण्डाऽपि हि चामुण्डा यत्सान्निध्यादचण्डाऽभूत् ॥ ५१०**

**व्याख्या**—ततः श्रीअभयदेवसूर्यनन्तरम्, श्री**जिनवल्लभ**सूरिरभवत् । किम्भूतः ? व्रतस्य धूः व्रतधुरा षष्ठीति समासः । अत्र भारवाची धूः शब्दः । 'ऋक्पूरब्धूःपथामानक्षे' इत्यप्रत्ययः समासान्तः । धुरस्तु अनक्षे राजधुरेतिवत् । अक्षे तु अक्षधूर्दृढधूरक्षः । तस्या वहन एकोऽद्वितीयो धौरेयो धुर्यो व्रतधुरैकधौरेयः । हि स्फुटम्, यस्य श्रीजिनवल्लभस्य सान्निध्यात् प्रभावात्, चण्डाऽप्यत्यन्तकोपनाऽपि चामुण्डा अचण्डा प्रसन्नहृदयाऽभूत् ।

अत्र सम्प्रदायः—एकदा श्रीजिनवल्लभसूरयश्चित्रकूटपरिसरे श्रीसङ्घेन प्रवेशके कृते चामुण्डादेवगृह उत्तारिता गुरवो बहिर्भूमौ गताः । एकेन वर्तनकेन चक्षुषी निष्कासिते । चामुण्डया रुष्टया क्षुल्लनेत्रे गृहीते । गुरवोऽप्यायाताः । पीडितः क्षुल्लः पृष्ट उक्तवान् स्वरूपम् । गुरुभिर्ध्यानेन साऽऽकृष्टा प्रतिबोधिता च । उक्तं च—'क्षुल्लो भोल्कः क्षम्यं देवते ! ।' ततस्तया पुरमध्ये खट्टिकगृहे छालकनेत्रे निष्कास्य क्षुल्लस्य नेत्रे कृते । ततः श्रीजिनवल्लभसूरयश्चामुण्डाप्रतिबोधका जाताः ॥ ५१०

**तत्पट्टेऽभूच्चतुःषष्टियोगिनीनां प्रसाधकः ।**
**युगप्रधानतामाप्तः सूरिः श्रीजिनदत्तराट् ॥ ५११**

**व्याख्या**—तेषां श्रीजिनवल्लभसूरीणां पट्टे, चतुःषष्टियोगिनीनां प्रसाधकः सूरिः श्रीजिनदत्तराडभूत् । **उज्जयिन्यां** पीठं १ योगिनीनाम्, **डिल्ल्यां** द्वितीयम्, **अजयमेरौ** तृतीयम्, अर्धं **भृगुकच्छे**—एवं सार्धपीठत्रये योगिनीचक्रमसाधयजिनदत्तसूरिरित्यादयः प्रवादा **गणधरसार्द्धशतकबृहद्वृत्ति**तो बोद्धव्याः । किम्भूतः ? युगप्रधानतामाप्तः प्राप्तः । देवतया यद्युगप्रधानत्वं प्रत्यपादीति भावः ॥ ५११

अथ श्रीजिनदत्तसूरेर्नाम्नोऽपि सप्रभावतामुद्भावयन्नाह—

**भूतप्रेततडिद्व्यालवेतालादिभयान्यपि ।**
**यन्नाम्ना निम्नतां यान्ति भक्तानामिह साम्प्रतम् ॥ ५१२**

**व्याख्या**—इह जगति, साम्प्रतमधुनाऽपि, यस्य श्रीजिनदत्तसूरेर्नाम्नाऽभिधानेन, भक्तानां सेवकानाम्, भूतप्रेततडिद्व्यालवेतालादीनाम्, भयानि निम्नतां नीचैस्त्वं यान्ति प्राप्नुवन्त्युपशाम्यन्तीत्यर्थः ॥ ५१२

**नरमणिमण्डितभालास्तत्पट्टे नमदनेकभूपालाः ।**
**जिनचन्द्रा गणपाला वाञ्छितदाने विबुधशालाः ॥ ५१३**

**व्याख्या**—तेषां श्रीजिनदत्तसूरीणां पट्टे, जिनचन्द्राः श्री**जिनचन्द्रसूरयो** गणपाला गच्छनायका अभवन्निति गम्यते । किम्भूताः ? नरमणिना मण्डितमलङ्कृतं भालमलिकं येषां ते नरमणिमण्डितभालाः, तथा नमन्तोऽनेके भूपाला राजानो येषां ते नमदनेकभूपालाः, तथा वाञ्छितदाने कामितवितरणे विबुधशालाः कल्पवृक्षाः ॥ ५१३

**श्रीजिनपतिगुरुपादाः षट्त्रिंशद्वादलब्धजयवादाः ।**
**स्थापितगणमर्यादास्ततोऽप्रमादा जयन्त्याढ्याः ॥ ५१४**

**व्याख्या**—ततः श्रीजिनचन्द्रसूरिभ्यः श्री**जिनपति**गुरुपादा जयन्ति । 'पादा भट्टारको देवः प्रयोज्याः पूज्यनामतः । यथा गुरुपादाः, अर्हद्भट्टारकः, **कुमारपाल**देव इतिवदत्र पादशब्दप्रयुक्तिः । किम्भूताः ? षट्त्रिंशतिविवादेषु लब्धो जयवादो विजयध्वनिर्यैस्ते षट्त्रिंशद्वादलब्धजयवादाः । तथा स्थापिता व्यवस्थापिता गणमर्यादा गच्छव्यवस्था यैस्ते तथा । तथा आढ्या ज्ञानादिभिः समृद्धाः ॥ ५१४

**तदनु जिनेश्वरगुरवः समभूवन्नेमिचन्द्रकुलचन्द्राः ।**
**तदनु प्रबोधसूरिप्रवरास्तत्पट्टसवितारः ॥ ५१५**

**व्याख्या**—तदनु श्रीजिनपतिसूर्यनन्तरम्, **जिनेश्वरगुरवः** समभूवन् । किम्भूताः ? **नेमिचन्द्रकुले** चन्द्रा इव आह्लादकत्वान्नेमिचन्द्रकुलचन्द्राः । तदनु तेषां श्रीजिनेश्वरगुरूणां पट्टे, सवितारः सूर्या उद्द्योतकारिण इत्यर्थः । **प्रबोधसूरि**प्रवराः समभूवन् ॥ ५१५

**कलिकालकेवलीति ख्यातिं प्राप्तास्ततश्च जिनचन्द्राः ।**
**बोधितभूपचतुष्टयकृतसेवा राजगच्छाख्याः ॥ ५१६**

**व्याख्या**—ततश्च श्रीजिनप्रबोधसूरिभ्यो **जिनचन्द्रा** बभूवुः । किम्भूताः ? कलिकाले केवली सर्वज्ञ इति ख्यातिं प्रसिद्धिं प्राप्ताः । तथा बोधितं प्रतिबोधितं यद्भूपचतुष्टयं तेन कृता सेवा भक्तिर्येषां ते तथा । ततो राजगच्छेत्याख्या येभ्यस्ते राजगच्छाख्याः । ततः प्रभृति **खरतरगच्छस्य राजगच्छ** इत्याख्या प्रावर्तत ॥ ५१६

**श्रीजिनकुशलमुनीन्द्रास्तत्पट्टे विघ्नकरटिपारीन्द्राः ।**
**विषमपथे जनमार्गितजलदानप्रथितपृथुयशसः ॥ ५१७**

**व्याख्या**—तेषां श्रीजिनचन्द्राणां पट्टे, श्री**जिनकुशल**मुनीन्द्रा बभूवुरिति गम्यते । किम्भूताः ? विघ्ना अन्तराया एव करटिनो हस्तिनस्तेषां विध्वंसे पारीन्द्राः सिंहाः । तथा विषमपथे दुर्गममार्गे जनैर्मार्गितं याचितं यज्जलं तस्य दानेन प्रथितं विश्रुतं पृथु विपुलं यशो येषां ते जनमार्गितजलदानप्रथितपृथुयशसः ॥ ५१७

**तत्पदपद्ममधुव्रतकल्पा जिनपद्मसूरिनामानः ।**
**अवधानकरा राजत्कूर्चालसरस्वतीबिरुदाः ॥ ५१८**

**व्याख्या**—तेषां श्रीजिनकुशलसूरीणां पदपद्मे चरणकमले, मधुव्रतकल्पा भ्रमरभ्रमकारिणो **जिनपद्मसूरि**नामानो अभवन् । किम्भूताः ? अवधानानि चित्तैकाग्र्यरूपाणि तानि कुर्वन्तीत्यवधानकरा अष्टावधानपूरका इत्यर्थः । तथा राजन् शोभमानः **'कूर्चालसरस्वती'**ति बिरुदः प्रवादो येषां ते राजत्कूर्चालसरस्वतीबिरुदाः ॥ ५१८

**श्रीजिनलब्धियतीन्द्रा लब्धिनिधानप्रधानगुणकलिताः ।**
**श्रीजिनचन्द्रा गुरवस्तदनु जयन्ति प्रतापाढ्याः ॥ ५१९**

**व्याख्या** – तदनु जिनपद्मसूर्यनन्तरम्, श्रीजिनलब्धियतीन्द्राः श्रीजिनलब्धिसूरयो जयन्ति। किम्भूताः ? लब्धिनिधानं च ते प्रधानगुणकलिताश्चेति समासः। तदनु श्रीजिनलब्धिसूर्यनन्तरम्, श्रीजिनचन्द्रा गुरवो जयन्ति। किम्भूताः ? प्रतापेन तेजसाऽऽढ्याः समृद्धाः ॥ ५१९

**कृतजैनशासनोदयविभवाः श्रीमज्जिनोदयास्तदनु।**
**श्रीजिनराजगणोदितमार्गरतास्तदनु जिनराजाः ॥ ५२०**

**व्याख्या** – तदनु श्रीजिनचन्द्रसूर्यनन्तरम्, श्रीमज्जिनोदया जयन्ति। किम्भूताः ? जिनशासनस्यायं जैनशासनः, कृतो जैनशासन उदयविभव औन्नत्यधनं यैस्ते तथा। तदनु श्रीजिनोदयसूर्यनन्तरम्, जिनराजा जयन्ति। किम्भूताः ? श्रीजिनराजगणेन श्रीतीर्थंकरवृन्देनोदितः कथितो यो मार्गो मुक्तिमार्गः सम्यग्ज्ञानदर्शनलक्षणस्तत्र रता आसक्ताः श्रीजिनराजगणोदितमार्गरताः ॥ ५२०

**श्रीजिनभद्रयतीन्द्रास्ततो विरेजुः क्रियासु निष्णाताः।**
**तत्पट्टोदयभूधरसूरा जिनचन्द्रनामानः ॥ ५२१**

**व्याख्या** – ततः श्रीजिनराजसूर्यनन्तरम्, श्रीजिनभद्रयतीन्द्रा विरेजुः शुशुभिरे। किम्भूताः ? क्रियासु साध्वनुष्ठानेषु निष्णाता निपुणाः। तेषां श्रीजिनभद्रसूरीणां पट्ट एवोदयभूधर उदयाचलस्तत्र सूरा इव सूर्या इव तत्पट्टोदयभूधरसूरा जिनचन्द्रनामानः श्रीजिनचन्द्रसूरयो विरेजुः ॥ ५२१

**सद्गुणराशिसमुद्राः समुद्रसूरीश्वरास्ततो जाताः।**
**तच्चरणकमलहंसाः श्रीजिनहंसा लसद्वंशाः ॥ ५२२**

**व्याख्या** – ततः श्रीजिनचन्द्रसूर्यनन्तरम्, समुद्रसूरीश्वरा जाताः। किम्भूताः ? सद्गुणराशेः सद्गुणराजेः समुद्राः। तेषां श्रीजिनसमुद्रसूरीश्वराणां चरणकमले हंसा इव तच्चरणकमलहंसाः श्रीजिनहंसा विरेजुः। किम्भूताः ? लसन् दीप्यमानो वंशोऽन्वयो येषां ते लसद्वंशाः ॥ ५२२

**श्रीमज्जिनमाणिक्याः सूरिवराः प्राप्तसुगुणमाणिक्याः।**
**प्रव्राजनगुरवो मम सञ्जातास्तदनु विख्याताः ॥ ५२३**

**व्याख्या** – तदनु श्रीजिनहंससूर्यनन्तरम्, श्रीमज्जिनमाणिक्याः सूरिवराः सञ्जाता बभूवुः। ममेति कवेः श्रीजयसोमोपाध्यायस्य प्रव्राजनगुरवो दीक्षागुरवः – तैरादौ दीक्षितोऽहमिति। तथा विख्याताः प्रसिद्धाः ॥ ५२३

**तत्पट्टपूर्वाचलचूलिकारविः सपत्नशैलावलिपक्षसत्पविः।**
**जगज्जनामोदकृदाननच्छविः सम्यग्यशोवर्णनसारवाक्कविः ॥ ५२४**
**युगप्रधानत्वपदप्रदानाज्जलालदीसाहिवरेण सत्कृतः।**
**प्रौढप्रतापो जिनचन्द्रसूरिर्विराजते सद्विजयी महीतले ॥ ५२५ – युग्मम्।**

**व्याख्या** – तेषां श्रीजिनमाणिक्यसूरीणां पट्ट एव पूर्वाचलचूलिका तस्यां प्रकाशकत्वाद् रविरिव तत्पट्टपूर्वाचलचूलिकारविः, जिनचन्द्रसूरिर्महीतले भूमण्डले, विजयी विजयवान्, विराजते शोभते। किम्भूतः ? सपत्नाः प्रतिपक्षा एव शैलावलिपक्षाः पर्वतश्रेणिच्छदास्तेषां छेदने सत्पविः शोभनशतकोटिः। यथा पविना गिरिच्छदच्छेदोऽक्रियत तथाऽनेन शात्रवः सर्वेऽप्यपाकृता इति भावः। तथा जगज्जनानामामोदकृद् हर्षकारिणी आननच्छविर्मुखरुचिर्यस्य सः। यन्मुखं दृष्ट्वा सर्वेऽपि प्रमोदन्त इत्यर्थः। तथा सम्यक् साधुतया यशोवर्णनाय सारवाचः प्रधानगिरः कवयो विचक्षणा यस्य सः। कवयः सारवैर्यद्यशो वर्णयन्तीति भावः। तथा जलालदीसाहिवरेण श्रीअकबरेण युगप्रधानत्वपदप्रदानात् सत्कृतः सम्मानितः। यस्मै श्रीअकबरेण युगप्रधानपदं दत्तमित्यर्थः। तथा प्रौढः प्रवृद्धः प्रतापस्तेजो यस्य स प्रौढप्रतापः ॥ ५२४–५२५

**तच्चरणाम्बुजहंसाः श्रीजिनसिंहाः प्रतापजितहंसाः ।**
**दीप्यन्ते शुचिवंशाः समस्तजनपूरिताशंसाः ॥ ५२६**

**व्याख्या**—तेषां युगप्रधानश्रीजिनचन्द्रसूरीणां चरणाम्बुजे हंसा इव राजहंसा इव तच्चरणाम्बुजहंसाः श्रीजिनसिंहा दीप्यन्ते राजन्ते । किम्भूताः ? प्रतापेन तेजसा जितो हंसो रविर्यैस्ते प्रतापजितहंसाः । तथा शुचिर्निर्मलो वंशोऽन्वयो येषां ते शुचिवंशाः । तथा समस्तजनानां साहिसम्मान्यत्वेन पूरिता पूर्णीकृता आशंसा वाञ्छा यैस्ते समस्तजनपूरिताशंसाः ॥५२६

**श्रीजैनशासनधुराधरणाय धुर्ये, सत्येकतः प्रबलसारयुगप्रधाने ।**
**मन्येऽन्यतोऽपि युगकोटिधृतौ समर्थः, श्रीसाहिना सुघटितो जिनसिंहसूरिः ॥ ५२७**

**व्याख्या**—मन्य इति वितर्केऽव्ययम्, एवं वितर्कयाम्यहम्—एकत एकस्मिन् पक्षे, प्रबलोऽधिकः सारो बलं यस्यैवंविधो यो युगप्रधानः श्रीजिनचन्द्रसूरिस्तस्मिन्, श्रियोपलक्षितं जैनं श्रीजैनं तथाविधं यच्छासनमाज्ञा श्रीजैनशासनं तस्य धूर्भारः श्रीजैनशासनधुरा तस्या धरणाय धुर्ये धौरेये सति; अन्यतोऽप्यन्यस्मिन् पक्षेऽपि, युगे कलियुगे, या कोटिः श्रीजिनशासनोत्कर्षस्तस्या धृतौ धरणे समर्थः क्षमः, श्रीसाहिना श्रीअकब्बरेण जिनसिंहसूरिः सुघटितः कृतः स्थापित इत्यर्थः । छायार्थस्त्वयम्—एकतो रथस्य वामभागे युगप्रधाने युगं रथाङ्गमीशान्तबन्धनं तस्मिन्, प्रधाने धूर्धरणाय धुर्ये सति; अन्यतोऽपि दक्षिणभागेऽपि युगकोटिधृतौ रथाङ्गाग्रिधरणे समर्थो धुर्यो ध्रियत एव । अन्यथा रथवहनाशक्तेः ।

'शासनं नृपदत्तोर्व्यां शास्त्राज्ञालेखशास्तिषु ।'

'सारो मज्जास्थिरांशयोर्बले श्रेष्ठे च ।' 'कोट्युत्कर्षासंख्यास्त्रिषु'—इत्यनेकार्थः ॥ ५२७

**श्रीजैनचन्द्रसुगुरो राज्ये विजयिनि विपक्षबलजयिनि ।**
**क्रमतो नृपविक्रमतः ख-भूत-रस-शशिमिते वर्षे ॥ ५२८**
**विजयदशम्यां विजया-जयादिविबुधावलीभिरुपचरितम् ।**
**पार्श्वं मानसविषयं कृत्वा विजये मुहूर्तेऽस्मिन् ॥ ५२९**

**व्याख्या**—जिनचन्द्र एव जैनचन्द्रः । स्वार्थेऽण् । श्रीजैनचन्द्रसुगुरो राज्ये साम्राज्ये, विजयिनि विजयनशीले सति, किम्भूते राज्ये ? विपक्षाणां बलं सैन्यं सामर्थ्यं वा जयति पराभवतीत्येवंशीलं विपक्षबलजयि तस्मिन्, नृपविक्रमतो विक्रमनृपशाकात् क्रमतः क्रमेण ख (०) भूत (५) रस (६) शशि (१) मिते १६५० वर्षे । विजयः श्रीरामस्य रावणप्रमापणेन यद्दशम्यां जातः सा विजयदशमीत्युच्यते, तस्यामाश्विनसितदशम्यामित्यर्थः । पार्श्वं श्रीपार्श्वं गौडीशं मानसविषयं मनोगोचरं कृत्वा ध्यात्वेत्यर्थः । किम्भूतं पार्श्वम् ? विजयाजयादिका या विबुधावली देवताश्रेणिस्तयोपचरितं निषेवितम् । अस्मिन् सन्निहिते विजये मुहूर्ते वहमाने सति ।

'द्वौ यामौ घटिकाहीनौ द्वौ यामौ घटिकाधिकौ । विजयो नाम योगोऽयं सर्वकार्यप्रसाधकः' ॥ ५२८–५२९

**श्रीजिनकुशलाम्नाये श्रीमच्छ्रीक्षेमकीर्तिशाखायाम् ।**
**श्रीक्षेमराजशिष्यप्रमोदमाणिक्यगणिशिष्यैः ॥ ५३०**
**श्रीजयसोमैर्विहिता धीसखवंशावली गुरोर्वचसा ।**
**श्लोकैः प्राथमकल्पिकमतिवैभवहेतवे मृदुभिः ॥ ५३१ –युग्मम् ।**

**व्याख्या**—श्रीजिनकुशलसूरीणामाम्नाये वंशे, श्रीमच्छ्रीक्षेमकीर्तिवाचकानां या शाखा सन्ततिविशेषस्तस्यां श्रीमच्छ्रीक्षेमकीर्तिशाखायाम् । 'शाखा द्रुमांशे वेदांशे, भुजे पक्षान्तरेऽन्तिके ।' पक्षान्तरे सन्ततिविशेषे यथा—'अलङ्करोत्येष मदीयशाखाम् ।' श्रीक्षेमराजानां श्रीक्षेमराजोपाध्यायानां शिष्या ये प्रमोदमाणिक्यगणयो वाचकास्तेषां शिष्यैः श्रीजयसोमैः श्रीजयसोमोपाध्यायैः, गुरोः श्रीमद्युगप्रधानश्रीजिनचन्द्रसूरेः, वचसा वाक्येन, मृदुभिः सुकुमारैः श्लेषभङ्ग्यादिरहितैः श्लोकैर्वृत्तैः,

प्राथमकल्पिकानां शैक्षाणां मतिवैभवहेतोर्बुद्धिव्यापकतानिमित्तम्, घीसखस्य मन्त्रिणः श्रीकर्मचन्द्रस्य, वंशावली [ वंश ]वर्णना विहिता कृता। प्रथमकल्प आद्यारम्भः प्रयोजनमस्य प्राथमकल्पिकः। 'विभुः प्रभौ व्यापके शङ्करे नित्ये' विभोर्भावो वैभवम्। भावेऽण्॥ ५३०-५३१

अथ कविः स्वकृतग्रन्थे न्यूनाधिककथनदोषमपाकुर्वन्नाह—

**यदधिकमत्राभिहितं न्यूनं वा वर्णितं मया विहितात्।**
**तत्र मनागपि नागो यस्मादन्योक्तमिह लिखितम्॥ ५३२**

**व्याख्या**—अत्र ग्रन्थे, मया ग्रन्थकर्त्रा, विहितात् पूर्वजैर्मन्त्रिराजेन वा कृतात् कार्याद् यदधिकमर्गलमभिहितं कथितम्, वाऽथवा, न्यूनं स्तोकं वर्णितं स्तुतम्, तैः कृतं बहु कथितमल्पमित्यर्थः। तत्र न्यूनाधिकत्वे मम मनागपीषदप्यल्पमपि न आगोऽपराधः। यस्माद्धेतोरिह ग्रन्थे अन्येन अपरेणोक्तं कथितमन्योक्तं लिखितं मया। स्वमत्या न लिखितं किन्तु परेण यथैवोक्तं तथाऽलेखि। ततो ममापराधो न कोऽपि शङ्क्यः॥ ५३२

न्यूनाधिककथने कारणमाह—

**रक्तमतिर्वदतितरां यस्मादधिकं कृतादपि प्रायः।**
**द्विष्टः कृतमपि सकलं न वदति यदपलपनाकुलितः॥ ५३३**

**व्याख्या**—यस्माद्धेतोः, प्रायो बाहुल्येन, रक्तमतिः स्नेहलः पुमान्, कृतादपि विहितादप्यर्थाच्छुभकार्यादधिकं वदतितरामतिशयेन ब्रूते। प्रायो बाहुल्येऽव्ययम्। द्विष्टो द्वेषी कृतमप्यर्थाच्छुभं कार्यं सकलं समस्तं न वदति न कथयति। कुतः? यद्यस्माद्धेतोरपलपनेनापलापेन निह्नवेन आकुलितो व्यग्रः स च द्विष्टत्वात् सन्तमपि गुणमपह्नुते॥ ५३३

**पूर्वजानामदृष्टत्वाद् रागद्वेषौ न तेषु मे।**
**दृष्टानां तु यथादृष्टं वर्णना विदधे मया॥ ५३४**

**व्याख्या**—पूर्वजानां श्रीसङ्ग्राममन्त्रिणः सकाशात् पूर्वोत्पन्नानां सागरराजादीनाम्, अदृष्टत्वाद् अनवलोकितत्वात्, तेषु सागरादिषु, मे मम, राग-द्वेषौ न। दृष्टानां तु श्रीसङ्ग्राममन्त्र्यादीनां यथादृष्टं दृष्टं वीक्षितमनतिक्रम्य यथादृष्टं वर्णना स्तुतिर्मया विदधे कृता। यादृशा दृशा तेषां गुणा दृष्टा इष्टास्तादृशाऽन्तर्दृशा विमृश्य लिखिता इति भावः॥ ५३४

**वंशावली वाचकपुण्यसारमुखाद् यथाऽश्रावि तथा विविच्य।**
**अस्माभिरप्यादरसारचित्तैर्लिवीकृतेयं कृतिनां सुखाय॥ ५३५**

**व्याख्या**—इयं वंशावली, वाचकपुण्यसारमुखाच्छ्रीमन्त्रिराजकथितवाचकपुण्यसाराननाद् यथा अश्रावि, तथाऽस्माभिरप्यादरसारचित्तैः सादरैर्भूत्वा, विविच्य विवेचनं कृत्वा, कृतिनां विचक्षणानाम्, सुखाय सुखहेतवे, लिवीकृता लिखिता॥५३५

**यद् राभस्यात् प्रमादाद् वा रसिकत्वेन वा मया।**
**न्यूनं तथाऽधिकं जातात् कृतं तद्दुष्कृतं मृषा॥ ५३६**

**व्याख्या**—रभसो वेगस्तद्भावो राभस्यं तस्माद् ग्रन्थकरणौत्सुक्यादित्यर्थः। 'रभसो वेगहर्षयोः' इत्यनेकार्थः। वा अथवा, प्रमादादनवधानाद्वा, अथवा रसिकत्वेन व्याख्यानरसाकुलितत्वेन, रसिको हि रसमेवोद्भावयति, न न्यूनाधिककथनजनितापशब्दादिकमपेक्षते। यदुक्तम्—

'गणयन्ति नापशब्दं, न वृत्तभङ्गं क्षयं च नार्थस्य। रसिकत्वेनाऽऽकुलिता, वेश्यापतयश्च कवयश्च॥'

मया जातादुत्पन्नान्न्यूनं तथाऽधिकं कृतं तन्मृषा मिथ्या दुष्कृतम्। 'मृषा मिथ्याऽनृते'॥ ५३६

**सुकृतानुमोदनातो यदर्जितं पुण्यमद्भुतं मयका।**
**तेनाखिलोऽपि लोको भवतु सुखी धर्मनिरतश्च॥ ५३७**

**व्याख्या** – सुकृतस्य पुण्यस्य अनुमोदनातः, साधु कृतं तीर्थयात्रादीति प्रशंसनाद् यत्पुण्यम्, मयका मया, अर्जितमुत्पादितम्, तेन पुण्येन, अखिलोऽपि समस्तोऽपि लोकः सुखी भवतु । च पुनर्धर्मनिरतो धर्मनिष्ठो भवत्विति । सतां हि मनोभिप्राय ईदृश एव भवति । यतस्ते चिन्तयन्ति –

'शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः । दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥' ५३७

**साहिश्रीमदकब्बर-राजदिनादखिललोकसुखहेतोः ।**
**अष्टत्रिंशे वर्षे लाभकृते लाभपुरनगरे ॥ ५३८**
**नन्द्याद् वंशावलीग्रन्थो ग्रथितोऽयं प्रमोदकृत् ।**
**आचन्द्रार्कं शुभोदर्कं सत्सम्पर्कं च वर्द्धयन् ॥ ५३९** – युग्मम् ।

*

**॥ इति मन्त्रिकर्मचन्द्रवंशावलीप्रबन्धः समाप्तः ॥**

*

**व्याख्या** – साहिश्रीमदकब्बरराज्यदिनात् पातसाहिश्रीअकबरस्य साम्राज्यप्राप्तिदिवसाद्, अष्टत्रिंशे वर्षे, **लाभपुरनगरे**, अयं श्रीमन्त्रिराजवंशावलीवर्णनलक्षणो ग्रन्थो लाभकृते लाभार्थम् । कृत इत्यव्ययं तादर्थ्ये । ग्रथितः सन्दब्धः सन्, आचन्द्रार्कं यावच्चन्द्ररवी तावन्नन्द्यान्नन्दतु समृद्धिमाप्नोतु । आशिषि रूपम् । किंविशिष्टात् साहिश्रीमदकब्बरराज्यदिनाद् ? अखिलानां समस्तानां सुखहेतोः सुखकारणात् । किम्भूतो ग्रन्थः ? प्रमोदं श्रोतॄणां हर्षं करोतीति प्रमोदकृत् । पुनः किम्भूतः ? शुभं श्रेय एवोदर्कं आयतिभवं भविष्यत्कालजातं फलं शुभोदर्कस्तम् । च पुनः सत्सम्पर्कं शोभनाभिधेयपरिज्ञानसंयोगमात्मनि वर्धयन् पल्लवयन् ॥ ५३८–५३९



**॥ इति श्रीक्षेमशाखायां वाचनाचार्यश्रीप्रमोदमाणिक्यगणिशिष्यरत्न-**
**श्रीजयसोमोपाध्यायशिष्यवाचनाचार्यश्रीगुणविनयैः**
**मन्त्रिराजश्रीकर्मचन्द्रवंशावलीवृत्तिः**
**सम्पूर्णा चक्रे ॥**

***

# [ वृत्तिकृत्प्रशस्तिः । ]

*

श्रीगुरुराजकृतानां श्लोकानामिव शुभार्थघटितानाम् ।
पुण्यानां श्लोकानां काऽपि व्याख्या मया विदधे ॥ १

न च दोषलवो ग्राह्योऽनुगृह्य मे तत्र यद्विमर्शकृतौ ।
व्यामोहः सुधियामपि का गणना मयि वराकेऽत्र ॥ २

गम्भीरार्थानामपि वृत्तानां यद्विचारणे प्रगुणा ।
मन्दाऽपि मन्मतिरभूत्, सा महिमा श्रीगुरोर्ज्ञेया ॥ ३

श्रीकर्मचन्द्रमन्त्री धन्यो यस्याद्भुता गुणश्रेणिः ।
स्वमुखेन श्रीगुरुभिर्व्याख्याता दक्षतानिधिभिः ॥ ४

रस[६]-बाण[५]-दर्शन[६]-इन्दु[१]-प्रमिते वर्षे वलक्षमधुपक्षे ।
विक्रमनृपतोऽष्टम्यां शनिवारे पुष्यनक्षत्रे ॥ ५

श्रीतोसामपुरे वरवाञ्छितदानप्रधानसुरवृक्षे ।
श्रीमन्त्रिराजकारितजिनकुशलस्तूपकृतरक्षे ॥ ६

श्रीकर्मचन्द्रराजाग्रहेण सदनुग्रहेण कुशलगुरोः ।
कुशलार्थसार्थसम्पादनाद्यथार्थाभिधस्य गुरोः ॥ ७

श्रीजयसोमगुरूणां साहिसभालब्धविजयकमलानाम् ।
शिष्येण वाचकश्रीगुणविनयेनैक्ष्य सद्ग्रन्थान् ॥ ८

रचिता निचिता सूक्तैर्मणिखचिता मुद्रिकेव हैमीयम् ।
सद्वर्णा सगुणाऽपि च वृत्तिर्मान्या बुधैर्बाढम् ॥ ९

॥ ग्रन्थाग्रं ३१५१, अक्षर १९ ॥

*

वाचक गुणविनय रचित

# श्रीकरमचंदमंत्रि-वंशप्रबन्ध।

॥ ऐँ नमः ॥

॥ ढाल १, राग–आसाउरी ॥

मंगल–प्रस्ताव।

फूलवधि-पास प्रणाम करि, वागवाणि समरेवि। श्रीजिनकुसल मुणिंदपय, हृदयकमलि सुधरेवि ॥ १
श्रीखरतर-गच्छ राजियउ, युगप्रधान जिणचंद। श्रीजिनसिंह मुनिंदवर जिनि रंजिय नृपवृंद ॥ २
तासु कथनि उवझाय गुरू, श्रीजयसोम सुसीस। वाचनाचारिज गुणविनय, मनि धरि अधिक जगीस ॥ ३
जिनशासन उद्योत कर, करमचंद नृपचंद। तेहनी वंशपरंपरा, प्रभणइ सोहग कंद ॥ ४
ते निसुणउ हरषइ करी, मंत्रीसर परबंध। धर्मवंत गुण गावतां, जिम हुवइ सुभ अनुबंध ॥ ५
आगे कुमरनरिंदना, विमल तणा सुरसाल। गीतारथ गुरू गूंथीया, गुण सुणीयइ सुविसाल ॥ ६

॥ चउपई ॥

पूर्ववंशवर्णन–श्रीकरण।



वंशशिरोमणि देवडावंश, देवलवाडइ अधिक प्रशंस। तिहां श्रीसागरभूपति भलउ, सूर वीर विक्रम गुणनिलउ ॥ ७
तेहनइ आठ रमणि गुणवती, पटराणी मानवती सती। मालव पातिसाहि बल जिणइ, जीतउ निज भुजबल करि रणइ ॥ ८
ऊवस तेहनउ कीधउ देस, किम परनइं सासहइ नरेश। तेहनइ त्रिण्ह थया सुत सिंह, बोहिथ गंगदास जयसिंह ॥ ९
बहिरंगदे बोहिथनी नारि, जिहांथी बोहिथहरां परिवार। आठ पुत्र तेहनइ ए भूप, आठ दिसा पालन गजरूप ॥ १०
श्रीश्रीकरण जेसं जयमल्ल, तोल्हा भीमो अरिउरि सल्ल। पदमा सोमसीह पुनपाल, पदमां भगिनी अतिसुकुमाल ॥ ११
अन्य दिवसि बोहिथ नृपराज, चित्रकूटि आयउ रणकाज। रुद्र प्रमाण सुभट शत साथि, सूरांनइ जय कहीयइ आथि ॥ १२
रायसिंहजी आगलि भिडयउ, जयत हथउ सुरलोकइ चडयउ।
हिव श्रीकरण करणि परकाम, विक्रमनृप जिम थयउ सुधाम ॥ १३
तेहनी रतनादेवी नारी, सोहइ सीलगुणइ संसारि। गढ मंडोरइ जिणइ बलि लियउ, रांणां नाम तिहां पामीयउ ॥ १४
तेहना सुत इण नामइ च्यारि, जाणे च्यार वेदविस्तार। समधर वीरदास हरिदास, उधरण पूरइ जगनी आस ॥ १५
गोरीसाहि षजानउ तियइ, अन्य दिनइ मारगि आवीयइ। लीधउ खोसी छलि बलि करी, सेना साहि तणी संचरी ॥ १६
वीद्यउ नगर देखि सामु हउ, सूर वीर किम भाजइ कहउ। सात सुभट शत सेती रणइ, झूझयउ सूर प्राण तृण गिणइ ॥ १७
पाछलि जुंहरि करि आविआ, सूर सकल रण रस भाविया। परलोकइ रण करीय पहुंता, धरणीपति कहीयइ रजपूता ॥ १८
तेह दुर्ग तिणि साहिइ लीद्ध, सामि विना परमेसरि दिद्ध। हिव जिम ए वंशावलि कही, ते सांभलउ मनइ गहगही ॥ १९
रतनादे पहुती कुलघरइ, खेडिपुरइ पहिली अवसरइ। समधर प्रमुख तिहां सुत च्यार, वधिवा लाग्या कला उदार ॥ २०

॥ दूहा ॥

तिण अवसरि खरतर सुगुरू, सूरि जिणेसर सार । साधु विहरइ विहरता, आया तिहां सुखकार ॥ २१
शुभ शकुने करि जाणीयउ, होस्यइ लाभ महंत । वरिषा वासइ तिहां रह्या, संयम धरि एकंति ॥ २२

॥ ढाल २, राजपुरुष पोंकारीयउ–ए देशी ॥

समधर अने तेना पुत्र-पौत्र ।

अन्य दिनइ शासनसुरी, निस भरि आवी तामो रे । श्रीगुरुनइ इम वीनवइ, होस्यइ फल अभिरामो रे ॥ २३
गछपति हरषित हूआ–आंकणी ।

च्यारि नृपतिसुत बूझस्यइ, जिनशासन उदय विमालो रे ।
करिस्यइ तिणि तुह्मनइ इहां, लाभ अछइ चउसालो रे ॥ गछ० ॥ २४

श्रीगुरुनी देसण सुणी, जाणी अमृत रेलि रे । प्रतिबूधा तिणि खिणि सवे, राजकुमर पुण्य वेलि रे ॥ गछ० ॥ २५
दिन प्रति जिन-पूजा करइ, निसुणइ श्रीगुरुवाणि रे । श्रीपुंडरगिरी रैवतइ, जात्रा करइ सुजाण रे ॥ गछ० ॥ २६
मारगि जातां घरि घरइ, पूगीफलनउ थाल रे । आप्यउ तिणि लोके कह्यउ, फोफलीया सुरसाल रे ॥ गछ० ॥ २७
संघपति पदवी लही, समधरि धरि संघभार रे । जयती उयरसरोवरइ, तेजपाल सुत सार रे ॥ गछ० ॥ २८
तारादेवी तेहनइ, लावनलीलनिधान रे । गूजरदेश धणी भणी, अन्य दिनइ बहु मानि रे ॥ गछ० ॥ २९
भेटी घणी देइ करी, लीयउ मुकातइ देसो रे । अणहिलपाटणरउ धणी, थयउ तेजपाल नरेसो रे ॥ गछ० ॥ ३०
वील्हा नामइ तेहनइ, सुत रतिपति सम गात्र रे । शत्रुंजय रैवतगिरिइ, संघ करी करइ जात्र रे ॥ गछ० ॥ ३१
मुगतिनिलय मुगत कीयउ, देइ दान अपार रे । सर्व संघ पिहरावीयउ, सोहगसिरि उरिहार रे ॥ गछ० ॥ ३२
सोवनमुद्रा थालस्युं, पंच सेर चित्त चाह रे । मोदकलाही घरि घरि करइ, लाछितणउ ल्यइ लाह रे ॥ गछ० ॥ ३३
श्रीजिनकुशल सूरीसनउ, पदठवणउ उच्छांहि रे । पाटणनगरि करावीयउ, श्रीआचारिज पांहि रे ॥ गछ० ॥ ३४
श्रीसंमेतशिखरिं जइ, करइ सफल निज माल रे । संघ सहित मनरंगस्युं, जाणी पूरव चाल रे ॥ गछ० ॥ ३५
पर सेनायइ रूंधीया, मारगि संघाधीस रे । संघ सबल ते जाणिनइ, नाठी नामी सीस रे ॥ गछ० ॥ ३६
लाहाणि पुंडरगिरि परइ, कीधी मारगि ताम रे । सत्रूकार दीयउ वली, राख्यउ जिणि निज नाम रे ॥ गछ० ॥ ३७

इम करि जिनशासनि उदउ, अनशन विधिसुं लीधउ रे ।
संघपति सरगि पधारीया, बपु बपु कारिज कीधउ रे ॥ गछ० ॥ ३८

तासु पाटि वील्हउ हूअउ, तसु घरि वीना नारि रे । कडूआ धरणा तसु थया, सुत नंदउ सुविचार रे ॥ गछ० ॥ ३९
श्रीसिद्धसेहरगिरि तणी, श्रीगिरिनारिनी जात्र रे । संघ पूज वली तिणि करी, पोषि अपूरव-पात्र रे ॥ गछ० ॥ ४०
पर्व दिवसनइ पारणइ, विविध अन्न पकवानि रे । साहम्मीवच्छल करइ, जावज्जीव प्रधान रे ॥ गछ० ॥ ४१
इम निज धन वावी करी, साते खेत्रि पवित्रो रे । सुर लोकइ लीला लही, निर्मल जासु चरित्रो रे ॥ गछ० ॥ ४२
तासु पाटि कडूअउ हूअउ, नामिइ विणि परणामि रे । मीठउ अमृतफल जिसउ, समरी पूरवज ठामि रे ॥ गछ० ॥ ४३
मेदपाट दिसि आवीयउ, चित्रकूटनइ वास रे । राजा अइ सनमानीयउ, फलीयउ पुण्यविलास रे ॥ गछ० ॥ ४४

॥ ढाल ३; वाहण सिला मउ ताग–हुसेनी धन्यासी ॥

कडूआनी कारकीर्दि ।

श्रीपातिसाहिनी वाहिनी ए, मालवदेसथी ताम । सुणी तिहां आवती ए, आकुल थया पुर गाम ॥ ४५
राणउजी इम कहइ ए, संघपति करउ उपाय । जिणइ सेना फिरइ ए, परधानइ तो थाय–आंकणी ॥ ४६
तिणि सेती संधि साचवी ए, पाछी साहिनी सेना । उतारी आवीयउ ए, सकति करी *महसेन ॥ राण० ॥ ४७
हिव नगरी हरषित हुइ ए, राजा द्यइ बहुमान । मंत्रीसर थापीयउ ए, देइ हय गय दान ॥ राण० ॥ ४८
हिव कडूअउ मंत्री हुअउ ए, गोत्र्यानउ कर छोडि । सुजस जगि जिणि लियउ ए, पूरि मनोरथ कोडि ॥ राण० ॥ ४९
वलि अणहिलपत्तनि गयउ ए, मंत्री धरिय उल्हास । नृपइ बहु मानीयउ ए, आप्यउ पाटण तासु ॥ राण० ॥ ५०
श्रीजिनबिंब भराविया ए, खरची बहुविध वित्त । सवे कर छोडिआ ए, रंज्या सजनां चित्त ॥ राण० ॥ ५१
लोकहिताचारिज करइ ए, श्रीजिनराजनइ पाट । दिरायउ जिणि विधइ ए, नंदिमहोच्छव थाटि ॥ राण० ॥ ५२
तिणि उच्छवि जे आवीया ए, वस्त्रादिकनइ दानि । संतोष्या साहमी ए, मानी काढइ कान ॥ राण० ॥ ५३
गूजरदेसइ जीवनी ए, हिंसा सगलइ वारि । कुमरनृपनी परई ए, हिव वरताविं अमारि ॥ राण० ॥ ५४
शत्रुंजय यात्रा करी ए, भरीया पुण्यभंडार । सरग सुख पामीया ए, कीधा काम उदार ॥ राण० ॥ ५५
मेरागर तसु सुत हूअउ ए, हरिषमदे तसु नारि । विमल आबूगिरइ ए, जात्रा करइ गिरिनारि ॥ राण० ॥ ५६
विमलगिरइ यात्रा करी ए, तीरथ मुगतउ किद्ध । गुपति दानइ करी ए, जगमइ जिणि जस लद्ध ॥ राण० ॥ ५७
कुलमंडण मांडण हूअउ ए, तासु सुपुत्र प्रसिद्ध । सुमहिमा तेहनइ ए, नारी सील समिद्ध ॥ राण० ॥ ५८
तीरथयात्रा तिणि करी ए, समरीनइ निज ठामि । सपरिवार उथइ ए, आव्यउ महेवा नामि ॥ राण० ॥ ५९
जिनपूजन पौषध करइ ए, पर्व दिवस ध्रमकाज । क्रमइ अनशन विधइ ए, पाम्यउ सरग समाज ॥ राण० ॥ ६०
उदयकरण उदउ हिवइ ए, तसु नंदन मतिधार । दयारस पूरीयउ ए, उछरंगदे भरतार ॥ राण० ॥ ६१
तेहना सुत बेवइ भला ए, नरपाल नइ नागदेव । तेजइ करी दिनकरु ए, करइ श्रीसदगुरू सेव ॥ राण० ॥ ६२
नागदेव घरि कुलवधू ए, नारंगदे वरवंस । गुणइ करी सोभती ए, सीलवती अवतंस ॥ राण० ॥ ६३
तासु तनय त्रय जयधरु ए, जेसल विरम नामि । कलागुणि आगला ए, सारइ सजनां काम ॥ राण० ॥ ६४

॥ ढाल ४; पुण्यइ प्रीतम वलि मिलइ–राग, गुंड मल्हार ॥

मंत्री वछराज ।

तेहनइ पुत्र त्रिण्ह हूआ, जाणे त्रिवरग सार । त्रिभुवननी रक्षा भणी, विहि कीयउ अवतार ॥ ६५
एहवा पुत्र पुण्यई हूवइ–आंकणी ।

श्रीवछराज वडउ तिहां, देवराज सुजाण । हंसराज त्रीजउ तिहां, सुणइ सुगुरू वखाण ॥ एहवा० ॥ ६६
तिहां वछराज सुभटपुरइ, निज बंधव जोडि । रिणमल नृप पासइ वसइ, नाणइ कांइ खोडि ॥ एहवा० ॥ ६७
अन्य दिनइ सेवा भणी, कुंभानइ पासि । रिणमल नृपति पधारिया, चित्रकूटि विमासि ॥ एहवा० ॥ ६८
रिणमल राणइ तिहां हण्यउ, करी कोइ प्रपंच । नृप सरीक जन मारिव[उ], न करइ खलखंच ॥ एहवा० ॥ ६९
हिव जोधउ सुत तेहनउ, तिणि देस विणास । जाणी अंतेउर गही, कर्यउ जंगल वास ॥ एहवा० ॥ ७०

* कार्तिकेय ।

राज काज सगला करी, वछराज मंत्रीसि । जोधउजी निज वसि कीयउ, पूछइ तसु निसदीसि ॥ एहवा० ॥ ७१
वयर लेवानइ कारणइ, लेइ योध अनेक । जोधइ राणउ निरदल्यउ, भोगी जिम भेक ॥ एहवा० ॥ ७२
मेदपाट दहवट करी, जोधउ जोधपुरि आइ । अंतेउर जंगल थकी, आणी हरषित थाइ ॥ एहवा० ॥ ७३
जोधानइ सीता समी, नवरंगदे नारि । वीकम वीदा नामि ए, दुइ सुत सुखकार ॥ एहवा० ॥ ७४
हाडी जसमादेवि नइ, जाया त्रिण्ह पूत्र । नीबा सूजा तिम वली, सातल सुभ सूत्र ॥ एहवा० ॥ ७५
वीकउ तेज अधिक गिणि, जसमादे देवि । सउकि तणइ षेधइ लगी, इम चिंतवइ हेव ॥ एहवा० ॥ ७६

उक्तं च—वरं रङ्ककलत्राणि, वरं वैधव्यवेदनाः ।
वरमरण्यवासो वा, मा सपत्नीपराभवः ॥ १

विक्रम कुमर छतां किहां, मुझ पुत्रनइ राज । आवेस्यइ तिणि राजनइ, जणावइ काज ॥ एहवा० ॥ ७७
जायामाया मोहीयउ, नृप योध बुलाइ । विक्रमनइ इणिपरि कहइ, तसु जेम सुहाइ ॥ एहवा० ॥ ७८
जे निज भुजि खाटइ धरा, सुत तेह प्रमाण । भोगवतां पितृ राजनइ, किम लहइ वखांण ॥ एहवा० ॥ ७९
बापनी भोगवी माय ज्यु, भगिनी पितृजात । राज्यसिरि सुतनइ कही, तिणि संभलि वात ॥ एहवा० ॥ ८०
जंगलदेस लेइ करी, साथइ [छइ] वछराज । बुद्धिमंत मोटउ अछइ, करउ तिहां वछ ! राज ॥ एहवा० ॥ ८१
एहनी सीखइ चालिज्यो, जाइ जंगलदेसि । मंत्रीनइ पुणि सीखवइ, तूं पूठि म देसि ॥ एहवा० ॥ ८२
छलि बलि सवि अरि वसि करी, सजडउ करी राज । मंत्र तिसउ करिज्यो तुह्मे, नावइ जिम लाज ॥ एहवा० ॥ ८३
तुह्म खोलइ सुत मइ दीयउ, तुह्म छइ मति प्राण । मत काइ एइनी कदे, लोपइ कोइ आण ॥ एहवा० ॥ ८४
सीख इख जिम त्रेवडी, वछराजसुं तेह । शुभ शकुने वलि प्रेरीयउ, नवि मावइ देहि ॥ एहवा० ॥ ८५
काहुंनी गामइ रही, भूमीया नरेस । काढीनइ सुख भोगवइ, वासी निज देस ॥ एहवा० ॥ ८६

॥ ढाल ५, राग—केदारो, गोडी—चंदलीयानी ॥

भाविक जन वंदउ सुह गुरु पाय, श्रीखरतर गछराय—ए देशी ।

वछराजनुं मंत्रित्व ।

पटराणी रंगदेवीनइ सुत थया हरष्यउ राय, लूणकरण तरणि जिसउ प्रतापइं धरइ दाय उपाय ।
वलि नरउ राजउ तेम घडसी वली वीसल नामि, मेघराज केल्हण सुत सवे, राखइ जग मइ निज नाम ॥ ८७
विक्रम नृप दीपइ अधिक पडूर, जगि वाज्यउ जस तणउ तूर ।—आंकणी ।
नृपवास काजइ गढ कर्यउ पाखती नगर निवेस, ववहारिया वसिवा तिहां आवीया सुणि सुनरेस ।
तिणि नगरनउ सुमुहूरतइ शुभलगनि सुंदर ठामि, जिहां भला मंदिर मालिया, कोडिमदेसर दीयउ नाम ॥ विक्रम० ॥ ८८
सवि मंत्र तंत्रइ पूछिवा वछराज एक धुरीण, ' परभूमि पंचानन ' विरुद जिणि धर्यउ अति सुप्रवीणि ।
शत्रुंजयादिक यात्र करि जिणि कर्यउ अंग पवित्र, देराउरइ जिनकुशलनी यात्रा करइ विमल चरित्र ॥ विक्रम० ॥ ८९
मुलताणरइ नरपति तिहां बोलाइ सुणि जसवाद,
वर तुरग करी बहु मानीयउ पंचांग देइ प्रसाद ।
तिणि छत्र एक ज आपीयउ बहु वर्ण करीय विचित्र,
विक्रम नृपति नइ सिरि धर्यउ जाणे चंद्र साथि निखित्र ॥ विक्रम० ॥ ९०

देवराजनइ सुत त्रिण्ह हुआ दस्सू तेजा नामि, भोज ज्युं त्रीजउ भुंण मंत्री सारइ सजनां काम।
हंसराज हंसतणी परइ जलमांहि मज्जन किद्ध, दस्सू तनय नीवउ वली जोगा रूपकरण प्रसिद्ध ॥ विक्रम० ॥ ९१

नीबा तनय खेतसी खरउ जोगा तनूरुह पंच, सिवराज पंचायण वली सिंहराज प्रमुख अवंच।
चउवीसवट्टइ देहरइ अद्यापि जसु संतान, ध्वजारोप करणी नितु करइ किम छोडइ कुलपुत्र मान ॥ विक्रम० ॥ ९२

श्रीवंत नइ जयवंत रूपा पुत्र कुलगृह दीप, मंत्रि कर्णसुत श्रीपाल दीपइ जाणि मुगतासीप।
सदारंग रायमल्लादि तसु सुत दोइ तेजा पुत्र, श्रीवंतना सुत पदमसी उदारिक मंत्र सुनेत्र ॥ विक्रम० ॥ ९३

वछराजनइ घरि घरणि वाल्हा देविना सुतसिंह, कर्मसिंह श्रीवरसिंह सोहइ सुजसि नरसिंह।
वलि रतनसी हिव करमसी नारि कोतगदेवि, तसु पुत्र राजा सूरिजमल संसार सुगुण गजरेवा ॥ विक्रम० ॥ ९४

मंत्रि राजधर सुत माल पीथा वली जयता जाण, संसारचंद्र सुत मान मानइ करी मेरुसमाण।
रत्नसीह सुत वस्ता वली रायपाल मांडण नूर, वस्तपाल सुत सुरताण सांकर ठाकुरसीह सनूर ॥ विक्रम० ॥ ९५

वयरसल्ल भाखरसीह आदिक मंत्री नूरा जात, रायचंद नेतसी प्रमुख मांडण तनय मंत्रि विख्यात।
धनराज महं रायपाल सुत रामदास सामीदास, नरसिंहना सुत नव थया नवनिधि जिम पूरइ आस ॥ विक्रम० ॥ ९६

भीमराज अख्खा वयर वाघ वर पंचायण नामि, दूदराज सांगउ जिण गउडा सुमति करि अभिराम।
विक्रम नरेसर वंसि हिव जागीयउ लूणकरण, अवतार लीधउ दांन देवा जाणे राय करण ॥ विक्रम० ॥ ९७

लूणकर्णनइ सुत जयतसी परतापसी सुप्रताप, रतनसीह तेजा वयरसी रूपसीह कृष्ण निपाप।
श्रीरामजी तिम नेतसी करमसी सुरिजमल्ल, कर्मसिंह मंत्रीसर हूंअउ हिव सुरमणि जेम अमुल्ल ॥ विक्रम० ॥ ९८

लूणकर्ण नइ लहु वयइ टीलक राजनउ जिण दिद्ध, विधु जलधि इंद्रिय चंद्र(१५४१) वच्छरि वीकानयरि प्रसिद्ध।
गढ कीयउ तिहां श्रीकर्मसिहइ नमिविहार उदार, बहु वित्त खरचि करावीयउ धन जे करइ एह जुहार ॥ विक्रम० ॥ ९९

श्रीशांतिसागरसूरि पांहइ नंदिमह मंडाणि, जिनहंससूरि थपावीयउ नवि करी धनरी कांणि।
मुनिवेस दानि संतोषीआ जे मिल्या उच्छवि तत्थ,
साहमीवच्छल वलि कीयउ धन तेहिज गिणउ सुक्यत्थ ॥ विक्रम० ॥ १००

मांगणां'मन' कारां थकी जिणि मुंज-भोज नरिंद, धन दान करि मूकाविया जसु नमइ सकल नरिंद।
पुंडरगिरइ रैवतगिरइ आबूअइ श्रीजिनजात्र, मुगतउ करी संघनइ करावइ श्रीसिद्धखेत्री सनात्र ॥ विक्रम० ॥ १०१

मारगइ लाहण साहमीघरि आपतउ मंत्रीस, पदठवणि चैत्यइ जात्र करि खरचीयउ धरी सुजगीस।
पीरोजीयां त्रिण्ह लाख दाखइ जेहि निसुणी वात,
सत्रूकार युग जलनिधि करम भूमी(१५४२) वच्छरि थइ सुहात ॥ विक्रम० ॥ १०२

जिणि कल्पपुस्तक चवद वरसां सीम हरिष वचाइ, बहु द्रव्य खरच्यउ अन्यदा चित्रकूटि प्रभुस्युं थाइ।
राजकुमरि बीजे आवीय ए निज सामि नइ दे थोभ, वीवाहउच्छव हिव करावी वद्धारी जिणि सोभ ॥ विक्रम० ॥ १०३

रस भूत इषु विधु(१५५६) प्रमित वच्छरि थापना जसु कीध, नमिचैत्य गगन मुनी समिति शशि(१५७०) वरसि पूरण सीध।
अन्यदा पहुता लूणकर्ण स्युं नंदगोकुलि मंत्रि, अरिघात करिवा वैरिसुं रण लागउ किणही मंत्रि ॥ विक्रम० ॥ १०४

मंत्रीस करि जिनपूज पहिली समरि श्रीनवकार, सागार अणसण लेइ सरणा च्यारि करिय उदार।
लूणकर्ण आगइ रणि भिडी सुरलोक लीलालीन, मानवंत पुरुष कहउ किसुं किम थाइ मनमइ दीन ॥ विक्रम० ॥ १०५

राजसी मेघा मंत्रि श्रीपरतापसिंह हजूर, परलोकि पहुंता रण करी किम मुडइ जे हुइ सूर।
लूणकर्णजी निज राजमुद्रा जयतसीनइ देइ, रवि तेज निज जिम सांझि वेला वेसानरहि ठवेइ ॥ विक्रम० ॥ १०६

हिव जयतसी नृप राज्य पालइ वैरिगजघटसिंह, तेहना सुत कल्याणमल श्रीमालदेव नृसिंह।
भीम कान्ह ठाकुरसीह श्रीकसमीरदेवीजात, पूर्णमल्ल सुरजनसिंह अचला मान श्रीरंग कहात ॥ विक्रम० ॥ १०७

वरसिंह मंत्री तेहनइ थप्पियउ गुणहि गंभीर, शीलवंत वीझादेवि तसु जसजित्त गंगानीर।
चांपानयरि छम्मास मदफरसाहि सेवा किध, पुंडरीकगिरि जात्रा तणउ फरमाण करावी लीध ॥ विक्रम० ॥ १०८

गढतणी कूंची हाथि जसु सवि देसनउ रखपाल, गिरिविमल-अर्बुद-रैवतइ करि संघनी संभाल।
जात्रा करी लाहण दियइ मारगइ मदफरसाहि, बहु मानीयउ मंत्री तिहां आणी निज मंदिर मांहि ॥ विक्रम० ॥ १०९

सत्रूकार जिनि मंडावीयउ युग जैन-प्रवचन-मात, शर चंद्र (१५८२) वरषि देराउरइ जिनकुशलसूरिनी जात।
करिवा मत्यउ नवि कर सकइ सांमुहउ आवि बइठ, निसि सुपनी आवी इम कहइ मुझ गडाले करउ रे पइठ ॥ विक्रम० ॥ ११०

इहां थकी जात्रा मानिस्युं मत करउ कोइ प्रयास, श्रीगडालातीरथ थयउ सवि पूरवइ मन आस।
वरसिंहना सुत हिव थया मेघराज श्रीनगराज, मंत्रि अमर श्रीभोजराज डुंगरसी हसधर हसराज ॥ विक्रम० ॥ १११

मेघराजना सुत साहसी थया पदमसी वइरसीह, पदमशीह सुत श्रीचंद मति करि मंत्रिया महिसीह।
वइरसिंहना सुत दोइ दीसइ सदारंग-कपूर, हरिराजनउ सुत योध तसु सुत भइरवदास अक्रूर ॥ विक्रम० ॥ ११२

भोजराज सुत वर राम कहीयइ अमरसिंह तनूज, सीपा सीहा सीमा सुणीजइ करइ जिनवर पूज।
सिंहराज वलि सिवराज हिव सीपा तनूरुह च्यारि, अर्जुन महं खीमसीह सुरजन झाझणसी सुविचार ॥ विक्रम० ॥ ११३

जेसिहदे जीवराज जगहथ मंत्रि सीहा पुत्र, सीमा तनुज राघव पंचा हम्मीर प्रमुख सुमित्र।
रायमल्ल रासा प्रमुख श्रीसिंहराज सुत सुवदीत, घडसीह जगमालादि सुत सिवराजना अधिक विनीत ॥ विक्रम० ॥ ११४

डुंगरसीह सुत नरवद भणीजइ तासु सुत परधान, मंत्रि अचल भारहमल्ल लाखणसीह प्रमुख समान।
राउ जयतसीहइ थप्पियउ मतिमंत श्रीनगराज, गिरिराज श्रीगिरिनारि जात्रा करि भवसागर पाज ॥ विक्रम० ॥ ११५

प्रतिग्रामि लाहण साहमी घरि करी तिणि अभिराम, अन्यदा श्रीमालदेव भूपति जंगली पुर गाम।
लेवा भणी सेना सजी आविवा लागउ जांम, नृप भणइ मंत्री मंत्र करि राखउ अह्मारी मांम ॥ विक्रम० ॥ ११६

नगराज मंत्रीसर विमासइ सब्बल श्रीमालदेव, विग्रहइ किम पूजियइ ए स्युं हिवइ सारइ देव।
पर निरबल नृपथी काज एहवउ सरइ किणही न आज, एरंड द्रुमि गजराजनी किम भाजइ सबली खाज ॥ विक्रम० ॥ ११७

छीलर जलइ मन हउंस पूरइ हंसनी कहि काइ, आभरणि पीत्तल तणे हेमनी हाम नवि पूराइ।
सुरताण श्रीसेरसाह सेवा करी कीजइ काम, ए मंत्र करी चाल्यउ नगउ किम लागइ सोनइं सांम ॥ विक्रम० ॥ ११८

करि भेटि करिवर करभ हयवर रंजियउ सुरताण, पाछलि कुमर कल्याण सरसइ मूकीयउ भय जाण।
राजलोक पुणि तिहां गयउ हिव तिहां आवीयउ नृपराज, मालस्युं साह्मउ झूझीयउ किम शरभ सहइ घनगाज ॥ विक्रम० ॥ ११९

